# अभिनवज्योतिर्धराः

(BUILDERS OF MODERN INDIA)

रचयिता
वहेचरभाईतनुजो भाईशंकरः पुरोहितः



१९८६
भारतीय विद्या भवन,
कुलपति क. मा. मुनशी मार्ग, मुंबई–४०० ००७

# समर्पणम्

येन कुलपतिना सुतनिर्विशेषं प्रेमपूर्णया दृष्ट्या
प्रेक्षितः संवर्धितश्च,
तस्मै पुण्यपुङ्गवाय कनैयालाल मुनशीमहाभागाय,
येन च विद्यावतां वरिष्ठेन प्रीत्यतिशयेन
अनुशिष्टः,
तस्मै गुरुवर्याय वेंकटेश्वरदीक्षिताय च;
कृतिरियं विनम्रशिरसा समर्प्यते ।

—माईशंकरः पुरोहितः

परमपूज्यानां स्वामिपादानां श्री अखंडानंद सरस्वतीनां

# शुभाशीराशयः

श्रेयांसः प्रेयांसश्च विद्वांसः सप्रेम श्रृण्वन्तु वक्ष्यमाणम्। वयमिह नाप्रस्तुतं प्रस्तुमः। प्रसीदन्ति चेतोवृत्तयोस्मदीयाः। प्रमोदन्तां भवन्तः। नन्दन्तु विद्यार्थिनः। आलोकवन्तो लोकाः समुल्लसन्तु। किमत्र कारणम्! अस्ति तदेतत्। विपश्चिदपश्चिमेन श्री भाईशंकरपुरोहितेन बाल्यादारभ्याद्यावधि श्रद्धया प्रज्ञया तपसा च क्रियासमभिहारेण दैवीं वाचमुपचिन्वानेन तस्या ऐदम्पर्यञ्च मन्वानेन, भवतु सत्सु लोककल्याणप्रेप्सावत्सु, भारतीयजननायकानां धार्मिकाध्यात्मिक–राजनीतिक–सामाजिक–क्षेत्रेषु प्रतिष्ठितानाम अनेकेषां सत्पुरुषाणां चित्राणि परस्परविचित्राणि पवित्राणि चरित्ररत्नानि सङ्गृह्य, सङ्ग्रथ्य, सन्निबध्य च, तादृशं सुरसरस्वती–कण्ठाभरणं निर्माय समर्पितं लोकेभ्यो येन समेषां हृदयम्, आनन्दलहरीभिः रत्नाकरायितं संपद्येत। एतेन सत्कर्मणा प्रसादपरिपूरितहृदया वयं भूयो-भूयः महाभागमेनं शुभाशीर्भिः समाजयामः। आशास्महे च यदेतादृशाभरणैरन्यैरपि एष गीर्वाणवाणी लोकांश्चोपस्कुर्याद् इति।

आनन्द वृन्दावन, मोतीझील,
वृन्दावन, जि. मथुरा.

अखण्डानन्द सरस्वती

# शुभाशा

आचार्य-भाईशङ्कर-पुरोहिता भारतीयविद्याभवनसंस्थायाः छात्ररूपेण प्रवेशं लब्ध्वा क्रमेण तत्र प्राध्यापकाः, प्रधानाध्यापकाः, निवृत्तेः पश्चादपि केन्द्रसर्वकारनियुक्तिभाजश्चूडामणिप्राध्यापक-पदमपि अलङ्कुर्वन्तिः। एतेषां एतादृश उत्कर्षक्रमो मयाऽपि तस्यामेव सस्थायां सातत्येन स्थितेन सहर्षं दृष्टः। अधुना निवृत्ता अपि ते संस्थां आत्मीयां मन्यमानाः प्रतिदिनं सोत्साहं पूर्ववत् कार्य-भारं वहन्ति। एते पण्डितप्रकाण्डाः सिद्धप्राध्यापकाः प्रवचन-कुशलाः, छात्रान् सम्पन्नमनोरथान् कुर्वन्तः, सरलसंस्कृतमाध्यमेन आकरग्रन्थानपि अध्यापयन्ति। एतेषां भाषासरणिः सरला, मधुरा, विषयानुरूपा, शुद्धा, प्रथितरूढप्रयोगवती नवयुगविचारानपि ऋजुभिः स्निग्धमसृणैः शब्दैः आविष्करोति। अतस्तदीयलेखानां वाचनं सुवाच्यं सुश्राव्यं हृदयंगमं हर्षावहञ्च भवति। अभिनव-ज्योतिर्धराख्येऽस्मिन् ग्रन्थे तैः भारतस्य आधुनिकानां महापुरुषाणां रेखा-चित्राणि चित्रितानि। तेषां विशिष्टं प्रदानमत्र स्पष्टीकृत-मतस्तस्य वाचनेन वाचका गौरवमनुभवन्ति। एते लेखाः संविन्नाम्नि भवनस्य संस्कृतवृत्तपत्रे प्रथमं प्रकटीकृताः। अधुना केन्द्रसर्वकारार्थसाहाय्येन ग्रन्थरूपेण प्रसिद्धीक्रियन्ते। एतस्य उत्तेजकस्य प्रेरकस्य प्रबोधकस्य ग्रन्थस्य प्रकाशनार्थम्, आचार्य भाईशङ्कर-पुरोहिता अभिनन्दनार्हाः। पुस्तकमिदं अखिलम् अस्य खंडो वा माध्यमिकशालायाः संस्कृतपाठशालायाश्च पाठ्यक्रमे नवीनसंस्कृत-गद्यरचना–निदर्शनरूपेण समाविष्टो भवेदिति आशास्महे।

—जयन्तकृष्णः हृ. दवे.
(मानार्हं नियामकः भारतीय विद्याभवनस्य)

# अभिनवज्योतिर्धराः

## प्रस्तावना

प्राचीनपद्धत्या नवीनतया वा रीत्या, संस्कृतमधीयानाश्छात्रा अन्तिमे शताब्दे जातानां भारतस्य सर्वतोमुखं विशेषतश्च सांस्कृतिकं राष्ट्रियभावनासमन्वितमभ्युदयं साधितवतां मानवोत्तमानां चरित्राणि यथावज्जानीयुः। तेषां महत्ताबीजं किम्? तेषां चरित्रघटने हेतवः के? कास्तेषामभिलाषाः? कीदृशं भारतं तैः कांक्षितम्? कथङ्कारं भूरि दुःखानि सोढ्वापि तैः देशसेवा समनुष्ठिता? कथञ्च तैर्भारतीयानामुत्तमसंस्काराणां दिव्यं तेजः प्रकटितमिति बुबोधयिषुणा, केषाञ्चिद्विशिष्टानां चरित्राण्यत्र वर्णितानि। तेषां विचारविभवं, विश्वस्मिन् विश्वे विशेषतश्च भारत उपकारपरंपरां च निदर्शयितुमयं कृत आस्ते विनम्रः प्रयासः।

भारतं नाम पुरुषरत्नखनिः। तत्रापि शतकेऽन्तिमेऽत्र यावन्तो यादृशाश्च महापुरुषा उद्भूतास्तावन्तस्तादृशश्च निखिलेऽपि विश्वे नैकशतक उद्भूता इति प्रत्येमि। अथापि विविधक्षेत्राणि स्वोद्यमेन पुष्यतां समेषां नृवराणां चरित्रग्रथनव्यापारलालसां परिहृत्य, केषाञ्चिदेव चरित्राण्यत्र वर्णितानि।

तत्रेदमेव प्रयोजकम्, येषां जीवनं कार्यञ्च प्रजानां शुभसंस्कारोद्बोधकं, राष्ट्रभक्तिसंवर्धकं, संघटनशक्तेर्निर्मापकं, राष्ट्रस्वातन्त्र्यस्य चार्जने विशेषत उपकारि; तेषामेव केषाञ्चिच्छील–कार्याण्यत्र चित्रितानि। स्थानमर्यादां परिपालयता नैकेषां

यथा–राजा राममोहन राय, प मदनमोहन मालवीय, राजेन्द्र-प्रसाद, सुभाषचन्द्र बोस, ईश्वरचन्द्रो विद्यासागर, स्वामी श्रद्धानन्द, सुब्रह्मण्य भारती, रमण महर्षि, सर् विश्वेश्वरैया, सी वी रमन, दादाभाई नवरोजी, लाला लाजपतराय, अबुलकलाम आझाद, सरोजिनी नायडु-इत्यादीनामनेकेषा स्वस्वक्षेत्रे राष्ट्रसेवा कर्मणि च भृशमुपकृतवतामपि चरित्राणि विस्तरभयान लिखितु युक्तरूपममन्यत। यदि कृतिरिय जनै सत्क्रियेतान्येषामपि चरित्राणि भविष्यत्काले लिख्येरन्।

अन्यच्च, नात्र (खि १९७४ त पर) जीवता महामानवाना चरित्राण्यन्तर्भावितानि। यतस्तेषामतिसामीप्यात, तैराधरयामपि बहु क्रियेत, तेषा विषये नापि स्यात निष्पक्षा दृष्टि समेषामित्यादि विमृश्य, पुण्यश्लोकाना नामशेषता गतानामेव जीवनान्युप वर्णिता यत्र।

अथ च, अन्योऽप्यस्त्यस्य रचनाया हेतु। सस्कृते पद्यापेक्षया गद्यमल्पीयो भवति। तत्रापि भाष्याणि हितोपदेशतुल्या कथाश्च विहायान्यत कठिन-कल्पना शब्द-समासभूयिष्ठमिति सारिष्ठमपि, सचमत्कारमपि, पाषाणभेदनमिव खेदकर भवति मृदुमतीना छात्राणाम। सस्कृतस्य व्यवहारभाषारूपेणोपयोगे चानुपकारि वर्तते। यया भाषया शैल्या च विभिन्नाना घटनाना भावानाञ्चासन्दिग्धम्, अनायासञ्च बोधन न भवति न सा भाषा-शैली जीवन्तीति प्रज्ञावन्तो मन्यन्ते। अतोऽल्पसमासा, सरलाऽपि गौरवान्विता, विविधभावानुरूपपदान्विता, क्वचित्क्वचिद् आरोहावरोह क्रोडीकुर्वन्ती, प्रवहणशीला, नवीनभाषाशैलीतो नातिदूरा भाषा छात्रेभ्यो

लम्भनीया, तन्मुखेन च अनतिदूरमैतिह्यं, भारतस्याध्यात्मिकी सदाचारसम्पन्ना च स्फुरन्ती सस्कृतिर्ज्ञापनीयेति मनोगत वर्तते।

निबन्धाना शैली घटनावर्णनञ्च तयादृते यया पठनसमय शिरोभारो नानुभूयेत। एकासनेनैव चैकैक चरित पठितुमुत्सुकता स्यात्।

अत्र चरित्राणा क्रम प्राय उत्पत्तिकालमनुरुध्यति, न तस्य तस्य चरित्रनायकस्योच्चावचभावम्।

अत्र स्वातन्त्र्यसग्रामस्य, सास्कृतिक-सामाजिकोत्थाने, आध्यात्मिकनवजागरणस्यैतिह्यविबोधन चेति मुख्य भवति लक्ष्यम्।

यस्य चरित वर्ण्यते तस्य समकालीनसमाजस्य, विशिष्टपरिस्थितेश्चापि यावच्छक्यमुपन्यास कृतो भवति। तत्सबद्धाना व्यक्त्यन्तराणामपि चाल परिचय कारित। पाठशालासु महाविद्यालयेषु च सस्कृतमध्येतृणामावश्यकता प्रामुख्येन रचनाविषयतामयागाहृत। विशालकायाना ग्रथाना पठने खेदमनुभवता लघुकायैश्च रेखाचित्रै महापुरुषरत्नाना परिचय लिप्सूना प्रबोधाय हृद्य भवतीद साधनमित्यभ्युपगम। यद्यपि एतान् पुरुषर्षभान् विषयीकृत्य गद्यपद्यमया सन्ति केचन ग्रथमणय सस्कृते। किन्तु प्राय प्राचीनां दुर्बोधा, विस्तरशोभा च शैलीमनुकुर्वन्ति तेऽत्रो नाऽवर्जयन्ति सामान्यच्छात्राणा चेतासि। स्वस्वमातृभाषायां प्रख्यातेव ग्रथानाश्रित्य ते शमयन्ति स्वीया जिज्ञासा, यदि नाम भवति सा। अत्र प्राचीनां शैलीमादरयापि नवीनाया आधुनिकभाषायुक्तमाया शैल्या तया सगम पर्नु प्रयतित यथा विपद्धजिज्ञासानां प्राचीनग्रथरत्नपठनेच्छाया गगनान स्यात्।

अत्रादृता शैली १५ शतकेभ्य पूर्व गणिताा

रत्नानामधिक साम्य दधाति, न समनन्तरकालकृतीनाम् । अत अर्वाचीनभाषाशैल्या सस्कृतग्रथविशेषाणाञ्च सेतुरूपाऽस्तीय शैलीति भावये ।

नात्र सर्वत्र सन्धिनिर्वाह कृत । यत्र खलु सहित वाक्यमर्थबोधे चेत विलश्नीयात् तत्रासधिकान्येव पदानि प्रयुक्तानि। पदान्यपि प्रायो नवीनभाषासु प्राप्तप्रवेशानि आदृतानि। अथापि प्रयोगवैविध्य पदवैविध्यञ्च यथामति परिरक्षितम् । बोधे सरलता व्युत्पत्तिलाभश्चेति द्वयमपि समासादयितु प्रयास कृतो वर्तते।

छात्रा इव पण्डितवरा अपि ग्रथादस्मान्नवयुगनिर्मातृणा चरितबोधेन किञ्चिदज्ञात जानीयरिति तेऽपि न वितथश्रमा भवेयु ।

आशासे सस्कृतप्रणयिनो गुणैकपक्षपातिनो विद्वास कृतिमिमामुदारमनसा स्वागतीकुर्युरिति ।

अस्य प्रकाशनेऽर्थसाह्य वितरद्भारतशासन, प्रकाशनभार सुमुद्रणव्यवस्थाञ्चोद्वहच्च मम पातृसस्था भारतीय-विद्याभवनम् आशीर्वादवाक्यैश्च सुबहु प्रोत्साहिन पू श्री अखडानदस्वामिन भवनस्य मा० नियमकान दवेमहाशयाश्च प्रति सादर सप्रणति च कृतज्ञतामावहामि ।

# अनुक्रमणिका


| | | पृष्ठम् |
|---|---|---|
| | शुभाशीराशय –स्वामी अखण्डानन्द सरस्वती | III |
| | शुभाशंसनम् –प्रा ज ह दवे | IV |
| | प्रस्तावना – लेखकस्य | V |
| १ | स्वामी दयानन्द सरस्वती | १ |
| २ | परमहंसो रामकृष्ण | १८ |
| ३ | लोकमान्य तिलक | ३५ |
| ४ | कवीवरो रवीन्द्रनाथ | ५९ |
| ५ | स्वामी विवेकानन्द | ७८ |
| ६ | महात्मा गान्धि | ९९ |
| ७ | कस्तुरबा गान्धि | ११६ |
| ८ | महायोगी अरविन्द | ११८ |
| ९ | स्वामी रामतीर्थ | १२९ |
| १० | सरदार वल्लभभाई पटेल | १४० |
| ११ | राजगोपालाचार्य | १५६ |
| १२ | सर्वपल्ली राधाकृष्ण | १६७ |
| १३ | पण्डितो जवाहरलाल | १८२ |
| १४ | कुलपति श्री मुनशी | १९८ |
| १५ | लालबहादुर शास्त्री | २०५ |
| १६ | ज्ञाननिधि संस्कृतम् (परिशिष्टम्) | २०९ |



# महर्षिः दयानंदः

वेदानाश्रित्य लोकानां वीर्यवद्धर्मदेशिने ।
दयानन्दाय धैर्यौजोदयानां मूर्तये नमः ॥

## जन्मकालीनभारतम्

अपारा खलु करुणाकरस्य करुणा भारते वर्षे। यदा यदा हि भारतस्यात्मा ग्लानिमाप्नोति, आसुरबलैर्विपद्यते, हताशो दैन्यं भजति, नानाक्लेशक्लिष्ट ईश्वरास्थामपि जहद्विलालस्यते, अज्ञानान्धकारच्छन्नदृष्टिः धर्मादिषु व्यामुह्यति, भव्यं शुभ्रं च पूर्वप्राप्तं दायं विस्मृत्य तुच्छान् कलुषितव्यापारानानुतिष्ठति, तस्य विवेकप्राणा प्रज्ञा च विलुप्तप्राया भवति; तदा कश्चिदुदारकर्मा, श्रद्धाधनः, दैवीसंपद्विग्रहरूपो महापुरुषो भूमिमेता-

मधिष्ठाय भास्वानन्धकारपटलमिव सर्वं तिमिरततिं निरस्यति। एतादृशमहापुरुषमणिभिर्मण्डिता भवति भारतीया इतिहासमाला।

आङ्गला भारतमातर सर्वंश समाक्रम्य स्थिरपदा अभवन्। परस्पर कलहपटवो भारतीया राजान, स्वातन्त्र्यभावनाशून्या, प्रजाश्च कुटिलमतीना शौर्यदाक्ष्यनिधीनामाङ्ग्लाना प्रभावभुग्ना अभूवन्। विधर्मद्वेपपराणा विलासशतै प्रजाधनमात्मसत्त्वञ्चापवाहयता यवनाना शासनमस्ताचलशिखरमाश्रयते स्म। हिन्दूराजानो गलितसत्त्वा विलासविपन्ना अभूवन्। स्वभावतो धर्मप्रियाऽपि भारतीया जनता बाह्याडम्बर धर्मानुष्ठानमिति, निष्प्राणक्रियाकाण्ड च परमार्थसाधनमिति, जातिभेदोपभेदपरिकल्पनाञ्च परमश्रेय – साधनमिति कलयति स्म। धर्माधिकारिणो गर्वतुन्दिला, अहश्रेष्ठताप्रतिष्ठापनपरा, वेदादिस्वाध्यायादहेरिव बिभ्यत धर्मतत्त्वावबोधशून्या, आत्मस्थापनैकरता, विगतविवेकनयना, अधर्मं धर्मं कलयन्त, अविदग्धान् श्रद्धालूननुयायिनोऽपि तथा ग्राह्यन्त, आन्ध्यगर्ते स्वय पतन्तोऽन्याश्च पातयन्ति स्म।

एतादृशे विकृतिभूयिष्ठे काले भारतस्य पश्चिमसमुद्रोपकण्ठे, गुर्जरप्रदेशे नररत्नखनिभूताया सौराष्ट्रशब्दिताया भूमौ, पुरुषपुङ्गव कश्चित् प्रादुर्बभूव।

## बाल्यावस्था

सौराष्ट्रे मोरबीसञ्ज्ञकमेक पत्तन वर्तते। तदा तत्र हिन्दूशासनमासीत्। मोरबीसमीपे च टङ्कारा नाम ग्रामो वर्तते। तत्र कृतवसति, वैदिकधर्मनिष्ठ, सज्जनाग्रणी करसनजी त्रिवेदी नामा विप्रश्रेष्ठो बभूव। तस्य पतिप्राणा व्रतनिष्ठा पत्नी १८८१ विक्रमाब्दे, भाद्रपदस्य मङ्गलभूयिष्ठे शुक्लनवमीदिने पुत्ररत्नमसूत। राज्ये महत्पदमधितिष्ठन पितु पुत्र इति स शैशवे बहुल मानितो बभूव। तस्य च मूलशङ्कर इति नक्षत्रान्वित नामाक्रियत।

कृतोपवीतस्य मूलशङ्करस्य यथाविधि वेदादिशिक्षा प्रारभ्यत। पुष्टगात्र स्वभावत एवोद्यमी अमन्दोत्साह मेधावी च मूलशङ्कर व्याकरण

वेलांश्च सोत्साहं पठन् त्रयोदशात्मक एव वयसि समग्र शुक्लयजुर्वेदं पाणिनीयञ्च स्मृतिसादकरोत्। एवमेव वेदसावपठिष्यत् कर्मकाण्डिशिरोमणिरभविष्यत्। किन्तु प्रसङ्गं कंश्चित् तज्जीवनोद्देश्यमेव परिवर्तनमवाप।

## शिवरात्रिपूजा

परम्परानुसारं पित्रा प्रयुक्तो मूलशङ्कर शिवरात्रिदिने उपवास कृत्वा रात्रौ शिवलिङ्गेऽभिषेकं भक्तिभरितेन चेतसा कुर्वन्नासीत्। सकलायां रात्रौ एवमुपासितो भगवान् शिव साक्षात्प्रादुर्भूय भक्ताय वरं ददातीति श्रुतमासीत्तेन। स च तत्तथैव श्रद्दधौ। व्यतीतायां मध्यरात्रौ सर्वे उपासका निमिलितनयना प्रसारितगात्रा सश्रितभित्तयश्च निद्राभिभूता अभूवन्। भगवद्दर्शनलालसो मूलशङ्कर एव वितमस्क पूजाप्रवण आसीत्। तदैव चपलगतयो भक्ष्यमार्गणव्यग्रा केचन मूषकास्तत्रागच्छन्। प्रसादपूर्णेषु पात्रेषु निर्बाधं सञ्चरन्त शिवलिङ्गमप्यधिरुरुहु। दृश्यमिदं मूलशङ्करस्य चेतो विक्षोभमयासः। शिवस्तुतिप्रवणानामनास्था, मूषकविद्रावणेऽप्यसमर्थं शिवलिङ्गं च विभावयतो मूलशङ्करस्य मन संशयप्रभञ्जनेनोन्माथितमभवत्। तस्येश्वरमूर्तिपूजाविषयिणी श्रद्धा समूलकाप कम्पिताऽभवत्। ईश्वरस्य यत् तात्त्विकं रूपं तद् द्रष्टुं स उत्कमना बभूव। ततो व्यतीते वर्षत्रये तस्यानिस्नेहभाजन भगिनी दुर्निवारेण व्याधिना लोकान्तरं प्रातिष्ठत। ततश्चाल्प एव काले तस्य परमादरभाजनं पितृव्योऽपि लोकान्तरं जगाम।

एभिस्त्रिभि प्रसङ्गैर्मूलशङ्करस्य चेतोऽतिव्याकुलं बभूव। न कुत्रापि तन्मनोऽरज्यत्। य यमपश्यत् तं तं स जीवनस्य किं रहस्यम्? परमात्मन किं वास्तवं स्वरूपम्? कथं वा तत्प्राप्ति? एवमादीन् प्रश्नान् पृच्छति स्म। केचन तथा पृच्छन्त तं मत्त, मन्दमतिं वाऽऽकलय्य निरुत्तरा अभूवन्, अपरे तूपहसन्त तमभर्त्सयन्।

मूलशङ्करस्य शुद्धां मनःस्थितिं विभावयन्तौ तत्पितरौ तं विवाहरज्ज्वा दृढं बद्धुमैच्छताम्। मूलशङ्करस्तु विवाहं जालमेवामन्यत। अथापि नासौ पितुराज्ञा साक्षात् प्रतिवर्तुं शशाक। अतोऽविदितसंचार एव पलायांबभूव विवाहदिनात्पूर्वम्। अहर्निशं सञ्चरन्, अविदितगन्तव्य, अकिञ्चनो धैर्यैकबन्धुः किशोरो मूलशंकरः कैश्चिद् दिनैः सिद्धपुराख्यं यात्राक्षेत्रं प्राप्त। तत्र यात्रिकाणां सम्मर्दं कुतूहलविस्फारितनेत्रैः पश्यन्नेव गृहीतः पितृप्रेषितैः रक्षुधावकैः। पलायनसाहसं तद् विफलं परिभावन् क्षोभविषण्णवदनः स पुनरपि नीतः टङ्कारागृहम्।

निम्नगामी पयःप्रवाह इव मनोऽभिगमो न निवारयितुं शक्यः। कृतेष्वपि नैकेषु प्रयत्नेषु न मूलशंकरस्य मनो गृहव्यापारेषु संसारभोगेषु चासज्जत। स खलु जगन्मूलं किम्? जीवनार्थः कः? किं सत्यम्? कश्च तदवाप्त्युपायः इत्यादि चिन्तासन्ताननिमग्नो न विश्रान्तिमलभत। अतः पुनः पलायनप्रवणो बभूव। शरीरादिनिरपेक्षः साध्यैकनिष्ठो दृढसंकल्पो मूलशङ्करः पुनरपि स्वजनप्रीतिं, गृहसुखञ्चाविगणय्य प्रच्छन्नं पलायितः। तदा तद्वयः २१ वर्षात्मकमासीत्। अतः पश्चाद्धियोऽस्य न पुनर्ग्रहणमभूत्। ततः पूर्णानन्दस्वामिना च प्रव्रज्याया दीक्षितः दयानन्देत्यन्वर्थंनाम धृत्वा भारतमातुः सर्वभागेषु पर्यटनमारभत।

अथाकिञ्चनोऽयं दयानन्दो ग्रामाद्ग्रामं, तीर्थात्तीर्थं, मठान्मठञ्चानारतं बभ्राम। किन्तु क्वापि हृदयोन्माथस्य प्रपञ्चमूलविषयकस्य जन्ममृत्युरहस्यात्मकस्य प्रश्नस्य समाधानं नालभत। सर्वत्र स प्रायो मृषा वागाडम्बरलग्नान्, स्वश्लाघारतान्, उदरभरिणः, दम्भिनश्चावालोकयत्। मठाधिपेषु मन्दिरेषु, सन्यासिसंघेषु, धर्मविद्योपजीविषु, न कुत्रापि स यथार्थधर्मानुष्ठानं, परमात्मपरायणताञ्च साक्षादकरोत्। अतो भृशं सतप्तहृदयः, किङ्कर्तव्यताविमूढश्च स निराशाविद्धो भारतमातुरार्यधर्मस्य च दुरवस्थां दूरीकर्तुमुपायमपश्यन्, जीवितनिरपेक्षो बभूव।

## जीवितनिर्वेद

अथैकदा उत्तराखातीर्थराजस्य बदरीनाथस्य यात्रा निर्वर्त्य, प्रतिनिवर्तमानो विम स्क एव दयानद हिमालयपुत्र्या अलक्नदाया नील, पाषाणभेदि, खलखलध्वनिना दिशामन्तराणि पूरयज्जल, निर्निमेषमवलोकयन्नासीत्। तत्तीरे तूर्णी तिष्ठन् मातु क्रोडाभिलाषी क्लिष्टो बाल इव स तरङ्गैर्नृत्यन्त्या नद्यारन्तरङ्गे आत्मानमर्पयितु धृतबुद्धिरभवत्। तस्य किङ्कर्तव्यताह चेतो विरुद्धा दिश कर्षतामुच्छलद्भावाना युद्धभूमिरिवाभवत्। एकतो जन्मवन्ध्यता पश्यन् देहमृत्स्नष्टुमकामयत, अपरतश्चात्महत्या क्लैब्यव्यापिनी जुगुप्सितामलोक्याञ्च कलयन् तस्या निवृत्ति युक्तरूपा मन्यते स्म। अन्ते च केनचिद्गृहीत्वा कृष्यमाण इव ततो निवृत्य हरद्वारमार्गं प्रपन्न ।

## गुरुकुलवास.

आसीत्कश्चिदखिलशास्त्रपारदृश्वा वाह्यचक्षुशून्योऽपि प्रज्ञाचक्षुषा प्रद्योतमान , अतीन्द्रियानपि भावान् साक्षादिव पश्यन्, वृद्धोऽपि देहदृढिम्ना यूनो लज्जयन्, विजितेन्द्रिय , जितकषाय , धर्मात्मा प्रज्ञाट्श्रेष्ठो विरजानन्द । श्रीकृष्णबालक्रीडापवित्रिते वृन्दावनेऽस्याश्रम आसीत्। अस्याप्रतिम वैदुष्य श्रावश्राव नैके विद्यार्थिनस्तमुपागच्छन् किन्तु क्रोधनस्यास्य तापमहसमाना कतिचिदिवरेवाहोभि पलायिता अभूवन्। गुरुगुणगणाश्रयोऽप्ययम् ससर्पप्रासाद इव शिष्यशून्योऽवर्तत। नून दृष्टिदोषस्य परिहारेच्छयैवास्मिन् क्रोधकज्जल निवेशित विधात्रा।

विद्यादानैकतृष्णाञ्च योग्यशिष्याभावादनारत परितप्यते स्म। दावाग्निरिव वन्ध्या विद्या तस्य पर्वताकार देह ज्वालयति स्म। तदैवागतस्तत्र तद्वैदुष्यकृष्टो स्वामी दयानद ।

त सुपरीक्ष्य, तस्यापरिश्राम्या विद्याक्षुधा च निश्चित्य, तमध्यापयितुमङ्गीचकार विरजानद ।

तत्र भोजनाच्छादनादिव्यवस्था दयानदेन स्वयमेव कर्तव्याऽऽसीत्। तस्याध्ययननिष्ठया परितुष्ट कश्चित् तस्मै भ्रष्टान् चणकान्, अपरो स्वल्प गोदुग्ध, तृतीयश्च वस्त्रद्वयमदात्।

तपोविद्यानिधेर्गुरोर्लाभात् प्रहर्षितो निष्ठाधनो दयानदो दिवारात्र तत्सेवाया सरस्वत्युपासनाया च कालमनैषीद्। अधीतस्य सम्यगनवबोधे, आश्रमकर्मस्खलने च स गुरुणा सभर्त्सन दत्तान् कठोरान् लगुडप्रहारानसहत। "मूढ! किमित्यत्र वर्तसे? दूरमपसर, न मे मृण्मयबुद्धिना त्वया प्रयोजनम्" इत्यनेकशस्तिरस्कृतोऽपि स न प्रतिवचन ददौ न च पलायनकल्पनामप्यकरोत्।

## गुरुदक्षिणा

एव वर्षत्रये व्यतीते, समाप्ते च विद्याराधने, कृतज्ञतागद्गदकण्ठो दयानदो गुरो पादौ गृहीत्वा गुरुदक्षिणा सूचयितु न्यवेदयत्। अस्यासाधारणेन धैर्येण, अप्रतिमेन मतिविभवेन, अनुपमया च मेधया सुतरा प्रसन्न, तादृशशिष्यलाभेन चात्मान कृतकृत्य कलयन् विरजानदस्त हर्षशोकमिश्रया वाचाऽभाषत–" वत्स! नाह त्वत्तो कामपि जडा द्रव्यमयी दक्षिणा कामये। वसिष्ठविश्वामित्रै प्रकाशिते, राम-कृष्णाभ्या परिपालिते, सीता-सावित्रीशीलसुरभिते चास्माक राष्ट्रे, चरित्रशून्यान्, बलवीर्यहीनान् तत्त्वदृष्टि विहाय मृषा वाग्जालशूरान्, धर्मध्वजिनो नि सत्त्वान् पामरान् जनान् दर्शदर्श नास्ति मे चेतस शान्ति। कथन्वत्र पुनरपि वेदविद्या प्रकाशेत! कथञ्च सर्वव्यापिनि एकेश्वरे भक्तिप्रवणा भारतीया वीर्यवन्तो दुर्दान्ता शीलशालिनश्च भवेयु। को नु खलु वीर्यवती वैदविद्या प्रकाश्य मिथ्याप्रत्ययेभ्यो जनान्निवारयेदिति चिन्ताकुलस्य मम न केवल बहि, आन्तरमपि जगत्, निबिडेन तमसा छन्न वर्तते। एतदज्ञानान्धकार दूरीकर्तुमसमर्थोऽह जीवनमेतन्निष्फलमेवावैमि। किमेतया प्रव्रज्यया यदि सा धर्मसेवाया सत्यप्रकाशने च देह न क्षपयति, रात्रिन्दिव चोदरपूरणमात्रेण काल गमयति?' उक्त्वैव किञ्चिदिव विरम्य च पुनर्बभाषे गुरुकल्पो गुरु–"तात! त्वामन्तरा

नाहं पश्यामि कञ्चित् गुरुभारमिमं वोढुं समर्थम्। गच्छ! तीर्थेषु, मठेषु, मन्दिरेषु, नगरेषु, ग्रामेषु, पल्लवीषु च पर्यटन्, ओजस्विनीं प्रोत्साहिनीं चार्षविद्यार्चिषं प्रसारय। तदेव मे दक्षिणा भवतु। तामेव गुरुदक्षिणां लब्ध्वाद्याप्यहमुच्छ्वसिमि। त्वमेव तां दातुं क्षमस इति च निस्संशयमवैमि"। इति।

भावनासलिलौघेन गुरुमुखकुहरादुत्पीडपूर्वकं प्रवहन्तीं पीयूषगङ्गां निरुच्छ्वासं पिबतो दयानदस्य चेतो निस्तमस्कं निश्चितकार्यं प्रगल्भसंकल्पं च समपद्यत।

"गुरुप्रवर! भवल्लब्धप्रकाशोऽयं जनो भवदीयामभिलाषामिमाम् आदेशं परिभाव्य, नतेन शिरसा तां समङ्गीकरोति"।

"गच्छ वत्स! आर्यजुष्टं मार्गं प्रतिपद्यस्व। शिवाः सन्तु ते पन्थानः"। इति सपुलकमभिभाषमाणो गुरुः दयानदशिरो हस्तेन स्पृष्ट्वाऽऽशीर्वादानवर्षत्।

## प्रचारयात्रा

तदा भागीरथीसलिलशीतले, हिमालयपादपरिवृते पवित्रे हरद्वारक्षेत्रे कुम्भेति धर्मयात्राकालोऽवर्तत। दयानदस्तत्र गत्वा सम्मर्दस्थितान् जनसंघानाकार्य, वैदिकधर्मस्य वीर्यवद्रूपं प्रकटयितुमारभत। सुदृढं वृषस्कन्धं तेजस्वि च शरीरं, मेघगभीरो स्पष्टवर्णो मधुरश्च स्वरः, असंदिग्धार्थः, मञ्जुलपदावलिमण्डितः अस्खलन् तत्त्वस्पर्शी अविकलश्च वाक्प्रवाहः, प्रहसनप्रचुरा लोकभोग्या, तर्कतीव्रा निश्चयावगाहिनी मर्मस्पर्शिनी च प्रस्तावशैली, इत्येभिरुपकरणैः सनाथो दयानदोऽचिरादेव सहस्रशो जनानामेकमात्रमाकर्षणं बभूव।

अनिकेतनोऽयं यत्र यत्र संविशति स्म तत्र तत्र सभामण्डप इवाभवत्। स खलु प्राचीनान् वेदबाह्यान् कालप्रविष्टान् जीर्णान् प्रत्ययानुपहसति

स्म। परमात्मानं न पाषाणेषु अपि तु सकलव्यापिनं, सर्वज्ञं, सर्वशक्तिमन्तं, एकरूपमेव च प्रतिपत्तुमुपदिशति स्म।

"न तीर्थयात्रया, न गङ्गास्नानेन, न चोच्चावचजातिविचारप्रतिष्ठापनेन, न तिलकादिबाह्याचारैरपि तु पौरुषपूर्णेन सदाचारेण, वेदनिर्दिष्टेन विज्ञानेन, सर्वबन्धुभावप्रवर्तनेन, हिंदूनां हीनभावहापनेन, विधर्मिणां प्रतीकारशक्तिप्रवर्धनेन, अन्त्यजादीनामस्पर्श्यभावपरित्यागपूर्वकमात्मसात्करणेन, नारीषु दिव्यभावसन्दीपनेन, तासां च द्रौपदीवदात्मसंमानसंधुक्षणेन–इत्येवमादिभिरेवोपायैरार्यधर्मः स्वनुष्ठेयः, रक्षणीयः संवर्धनीयश्च।"

"हिन्दुभिर्नीचत्वेन परिगणिताः, अपमानस्याधोगतेश्च परां काष्ठां प्रापिताः अन्त्यजाः प्रतिदिनं इस्लामधर्मं ख्रिस्तधर्मं वा आश्लिष्यन्ति। तथा कृतवन्तश्च पुनः शिक्षां, प्रतिष्ठां, अधिकारपदञ्चावाप्य, स्पृहणीयस्पर्शा जायन्ते। कीदृशीयं मौढ्यप्रसूता हिंदुसुवर्णानां क्षतिः! विश्वबन्धुत्वव्यापकस्यार्यधर्मस्य च कीदृगिदं विडम्बनम्! कथञ्चास्य व्यवहारस्य दुरायतिं न पश्यथ! एतेन खलु न केवलं हिंदूनां धर्मः, अपि तु राजकीयं, आर्थिकं, सामाजिकं, नैतिकञ्च जीवनं विपत्स्येत। नारीणां शिक्षया स्वाभिमानः पोषणीयः। निःसत्त्वा दास्यभावदीनाः स्त्रियः कथं नरशार्दूलान् प्रसूयेरन्! कथं वा ता आत्मजानां सत्त्वं शीलं आत्मगौरवं च प्रदीपयेयुः। ननु यूयमार्यप्रसूतिः। न जातु यूयं तुच्छं मृषाप्रत्ययकुण्ठितं, कूपमण्डूकायमानं जीवनं यापयितुमर्हथ। अस्माकं दीर्घदृष्टयो मुनयो युष्मद्दुरवस्थां विभाव्याश्रूणि मुञ्चन्ति, पामरतां पश्यन्तो लज्जन्ते, संकुचितताञ्च सञ्चिन्त्य विषण्णा निःश्वसन्ति।"

एवमविरतं प्रवर्तमानो दयानन्दवाक्खड्गः श्रोतृणामज्ञानासुरं खण्डशः करोति स्म। नास्य भोजनाच्छादनवासादिचिन्ता येन श्रीमतो मठाधिपाननुनयेत्। नासौ सम्मानाकाङ्क्षी येन धर्मध्वजिनो धर्मनेतॄनावर्जयेत्। नास्य षष्टिभीतिर्येनाधिकारिणश्चाटूक्तिभिः प्रीणयेत्।

भौतिके जीवने गलितास्थोऽय पुरुषपुङ्गवो भारतस्याज्ञानासुरग्रस्त चिरमूर्च्छितमात्मानमुद्बोधयितु समर्थं सर्वमुपायमुपादेय, सर्वविध त्याग श्रेय, दु खोदर्कं साहसञ्च पुरुषार्थममन्यत। स्वसिद्धान्तदृढश्च पुरुषसिंह स सर्वशक्तिसमन्वितमपि विपक्ष सिंहो वृकमिव विना विक्षोभ पश्यति स्म। एव बुद्धिक्षुरेण जनतासशय शकलीकुर्वत प्रभञ्जनस्येव सर्वसञ्चारिणोऽस्यानुयायिन इव विद्विषोऽपि वर्धन्ते स्म।

अथ भारतीयविद्याना दुर्गरूपा तीर्थमणि काशी प्रस्थिता दयानन्द स्वमतप्रचाराय। बहवोऽमन्यन्त यद् नास्तिक्ताया नवावतार चार्वाक इव प्रवचनपटुरय काश्या विगलितमदो भविष्यति। काशी किल शास्त्रपारदृश्वना सनातनधर्मतत्त्वदृशा प्रतिवादिभयङ्कराणा विदुषा खनिरिव वर्तते। तत्रत्या धर्माभिमानिना विद्वासोऽस्य वादकण्डुमुपशमय्य सनातनधर्मध्वजमुन्नमयिष्यन्ति–इति। अत पूर्वपराजिता नैके विद्वासोऽपि दयानदस्य काशीपण्डितै शास्त्रार्थं श्रोतु काशीमुपगता। काशीस्था विद्वासोऽपि, दुस्तर्करूपप्रमाणैश्च प्रवर्तमान धर्मव्यवस्थामुन्मूलयितु प्रवृत्त दयानद शास्त्रार्थचातुर्येण पराजेतु कृतमतयोऽवर्तन्त। परस्पर परामृश्य च तै पण्डितश्रेष्ठाना वादनिपुणानामेक मण्डल न्ययोजि।

## वाराणसीविजया

दयानद १९६९ खिस्ताब्दे काशी समागत। तदागमन न केवल विद्वत्सु परतु साधारणजनेष्वपि महत् कुतूहलमजनयत्। सोत्साह सर्वे शास्त्रार्थदिन प्रतीक्षन्ते स्म। विद्यावतामग्रणी काशीनृप ईश्वरनारायण. सभाध्यक्षा वृत। एकतो वेदसहायो दयानद, अपरतश्च विद्वन्मूर्धन्या विशुद्धानन्द–ताराचरण–बालशास्त्रि–वामाचार्यप्रभृतय स्पर्धालवोऽभूवन्। एते सर्वेऽपि नैकशास्त्रार्थविजेतारोऽभवन्। किन्तु दयानन्दयुक्ती प्रतिक्षेप्तु नापारयन्। दयानद वादेन जेतुमसमर्थाश्च रजन्या सम्पनाया, दण्डादण्डि–युद्धेन प्रावर्तन्त समीहित

साधयितुम्। किन्तु हन्त! तदा तत्रोपस्थित आरक्षकाग्रणीर्युद्धोद्यतान् तान् निवार्य दयानद सुरक्षित स्वगृहमनैषीत्।

तदनु सप्तकृत्व दयानद काशी समागत । किन्तु न कस्यापि पुरुष शार्दुल त धर्षयितु शक्तिरासीत्। एव काशीविजयेन दयानदस्य महिमा, तद्विपक्षाणा द्वेषश्च परा वृद्धिमभजताम्। स खलु भारतस्य सर्वदिक्षु व्रजन् लोकाना वेदाध्ययनेन तदुदितसत्त्वशालिधर्मानुष्ठानेन च वेदनिष्ठा सधुक्षितुमनारतमयतत।

एतेन हिन्दुधर्मानुयायिना न केवल मिथ्याप्रत्ययपरित्यागफल बभूव, अपितु यत् ख्रिस्त-इस्लामधर्मानुयायिभि सामाजिकव्यवहारनिन्दया क्षोभितचेतसा हिन्दूना स्व-स्वधर्मे परिवर्तन क्रियते स्म सा प्रवृत्तिरपि दृढ खिलीकृताऽभवत्। यतो दयानदोपदेशेन निम्नजातीया "वयमपि अन्ये इव समानगौरवभागिनो भवाम" इत्यध्यवस्यन्। वैदेशिकै पूर्व क्षोभितश्रद्धा अपि पुन हिन्दुधर्मस्य ओजस्वि स्वरूप प्रबोधिता सन्त "हिन्दुधर्मो नून महान् सत्त्वसपन्नश्च धर्म" इति च भावयाचक्रु। स्वधर्मगौरवबुद्ध्या च धर्मान्तरस्वीकारमति परित्यजु। एकमेकतो रूढिग्रस्ता हिन्दवोऽपरतो विधर्मिणश्चापि दयानद शत्रुभावेनापश्यन्। अतो हि दयानदस्य शत्रुगण सख्यया बलेन च वर्धर्तुनद इव प्रचीयमान आसीत्।

## आर्यसमाज-स्थापना

हिंदुधर्मस्य विस्मृतप्रायाणा सत्त्वसपन्नानामोजस्विना चाशाना वेदमुखेनाप्रतिमेन प्रकाशनेन दयानदस्वामिनोऽनुयायिवर्गोऽपि प्रवृद्धमान आसीत्। जनताया धर्मरुचि वेदनिष्ठा चोचितेन पथा कार्यप्रवणा विधातु स्वामिना आर्यसमाज नामा सघ स्थापित। मुबापुर्यां १८९५ खिस्ताब्दस्याप्रिलमासस्य दशमदिने स्थापितोऽय समाजो हिन्दुधर्मस्य नवीनतया प्रकाशित स्वरूप जनतासु प्रबोधयितु कृतनिश्चयोऽभवत्। समाजेनाङ्गीकृता सिद्धान्ता इमे –

# सिद्धान्तषट्कम्

(१) वेदप्रतिपादितः सर्वज्ञः सर्वशक्तिमान्, सर्वव्यापी, अव्यक्तः अद्वितीयः, निर्विशेषः, जगदुत्पत्तिस्थितिलयकारणमेव 'परमात्मा'।

(२) ऋषीन् द्वारीकृत्येश्वर एव वेदानाविश्चकार।

(३) वेदा एव सर्वातिशायि, अबाधितं, शुचितममेकमात्रं प्रमाणम्।

(४) आर्यसमाजः सत्यसंरक्षणेऽसत्यनिराकरणे चानारतं प्रयतिष्यते।

(५) समाजोऽयं जनकल्याणप्रवृत्तीः प्रचालयेत्।

(६) जनानां शारीरिकीमार्थिकीं नैतिकीमाध्यात्मिकीञ्चोन्नतिं साधयितुं सदैव बद्धकटिः स्यात्।

आर्यसमाजस्थापनां विधाय देशे विविधपत्तनेषु तस्य शाखा प्रशाखाश्च स्थापिता येन प्रतिजनं समाजसिद्धान्ता प्रसरेयुः। समग्रे भारते कृतपदोऽप्ययं समाजः पञ्जाब–उत्तरप्रदेश–राजस्थान–बिहार–प्रदेशेष्वाधिक्येन प्रगुणितप्रकर्ष आसीत्। विविधप्रदेशव्यापिनीनां समाजशाखानां प्रवृत्तिप्रेरणं च केन्द्रीयसमाजेन क्रियते स्म।

न केवलं भारतेऽपि तु विश्वे बहुत्र स्थलेषु समाजसिद्धान्तान् प्रसारयितुं मण्डलानि निरमीयन्त। तेषाञ्च संचालनं भारतराजधान्यां देहल्यां स्थितेन केन्द्रियसमाजेन व्यधीयत। एवञ्च आर्यसमाजमुखेन दयानदस्य हिन्दुधर्मदृष्टिः धर्मोद्धारप्रवृत्तिश्च सर्वत्र भूमण्डले वृद्धिमती प्राकाशत। लक्षशो जना समाजसेवामुररीकृत्य, बद्धकटयो ग्रामाद्ग्रामं, जनाज्जनञ्च हिन्दुधर्मस्य नवावतारं निवेदयन्ति स्म। वेदशिक्षाप्रधानैर्विद्यालयैः, व्यायामशालाभिः, नारीशिक्षासदनैः, दलितजातीनामुद्धारकेन्द्रैः, हिन्दूधर्मस्य हृदयप्रकाशकग्रन्थरचनाभिः, प्रवचनशतैश्चैव नैकप्रवाहैः प्रवहन्ती भागीरथीव समाजसरिताऽस्खलितं प्रवहति स्म। नवीनेनानेन धर्मप्रवाहेण धौतस्वान्ता दया

नद हिन्दुधमस्य सरक्षक परमात्मदूतसमन्यन्त । 'महर्षि'रित्युपाधिना त मण्डयित्वा च ते तस्मिन्नात्मन समादर प्राकटयन् । 'सैयद अहमद', नामा इस्लामधर्मी, 'रेवरण्ड स्कोट', नामा खिस्तगुरुरपि दयानन्दस्याप्रतिमया प्रतिभया, तेजस्विकार्येण च प्रभावितौ तदनुयायिगण प्राविशताम् । किन्तु नया सिद्धिर्दयानन्देन विना कष्टमासादिता । पूर्वक्तप्रकारेण यत्र यत्र स गच्छति स्म तत्र तत्र तस्य तेज शमयितु प्राणानपहर्तुं च कृतसकल्पा विरोधिनोऽभवन् । तस्य देहत्राणायारक्षका नियोक्तव्या इत्यपि प्रियै सूचितम् । किन्तु साहसावतारायास्मै न तदरोचत । ये किल साक्षादपकर्तुमसमर्थास्तान् सिह श्रृगालानिव स कातरान् तृणायामन्यत । न च तादृग्भ्यो भीतिलेशोऽपि तमस्पृशत । समुपस्थिते च प्रतिद्वन्द्वि-प्रत्यवाये हसन्नेव निष्कम्प तान् प्रतितिष्ठति स्म । तादृशा केचन प्रसङ्गा अत्र निर्दिश्यन्ते –

(१) एकदा महर्षि जाह्नवीतीरे सञ्चरन्नासीत् । तदा सहसैव दृढ देहौ द्वौ पुरुषौ तमाक्रमताम् । तञ्चोत्सार्य नदीजले उत्क्षेप्तुमयतताम् । तयोरभिप्राय विदित्वा दयानदस्तौ झटिति हस्ताभ्यामाममर्द । दृढगृहीतौ च तावादाय स्वय नद्या पपात । त्रस्ताभ्या च ताभ्या सहैव गभीरे जले निममज्ज । उद्गच्छत्प्राणौ च तौ विभाव्योन्ममज्ज । यमपाशाकल्पात्स्वा मिहस्ताच्च सदय मुक्तौ तौ सिहात् सारमेयाविव निम्नमुखावगच्छताम् ।

(२) अमृतसरनगरे स्वामी महत्या सभाया व्याख्यानप्रवृत्त आसीत् । सहस्रशो जना सावधान श्रवणैकरता अवर्तन्त । केचन बाला सहसैव पाषाणान् क्षेप्तु प्रारभन्त । लोकैर्गृहीतेषु तेषु "दयानदविरोधिभि मिष्टान्नदानेन संलोभयित्वा वयमत्र प्रेषिता" इत्यभणन् । लोकेभ्यो बालान् विमोच्य स्वामी तेभ्य सप्रणय स्वादु भक्ष्याण्यदापयत् ।

(३) असाधारणमभूत् स्वामिन प्रत्युत्पन्नमतित्वं प्रहसनपटुत्व च । एकदा कश्चिद् विद्वन्मानी शास्त्रार्थे स्वामिनं पराजयितुमागत । स च स्व विद्वत्तरं प्रख्याप्य, स्वस्मै स्वाम्यपेक्षया उच्चासनमयाचत । दयानद स्वीयान् यथापूर्वमनगात् । उच्चासनस्याधिनिष्ठति विदुषि स उज्जगाद–"यदि

उच्चै स्थित्या वैदुष्योन्नतिर्भवति तर्हि नून स वृक्षशाखामधिरूढ काको भवतोऽप्यधिकविद्य स्यात्। श्रुत्वैतज् जनै उपहसित सलज्ज स विना विवाद पलायामास।

(४) अथैकदाऽन्य पण्डित छुरिकाहस्त समागत। सोऽभाणीत् "यो नु पराजित स्यात्तस्य हि नासिकाच्छेदो भविष्यति।" स्मयन्नेव स्वामिश्रेष्ठोऽवदत् "किमपराद्ध वराक्या नासिकया ? यदि किञ्चिदङ्ग छेदमर्हति नून तज्जिह्वैव भवतु। सैवापराधिनी भवति" इति।

(५) क्षमेव क्षमाशीलोऽभवदय महर्षि। एकदा स अनुपशहरे व्याख्यान कृतवान्। तत केनचित्ताम्बूल दत्तम्। मुखे निवेशयन्नेव स सविष तदिति बुबोध। स्वामिनिबद्धभक्ती रक्षकाग्रणी "सैयद"स्तत्रासीत्। स हि विषद गृहीत्वा कारागारे प्रक्षेप्तुमैच्छत्। किन्तु स्वामी हसन्नेवैवमवोचत् "विसृज्यतामय वराक। अहन्नु जनाना मुक्तये समागत, न बन्धनाय"। श्रुत्वैतत् 'सैयद' आश्चर्यपिहिताधरो बभूव।

(६) कर्णसिहनामा करणवासभूपो बभूव। तत्कपाले कलङ्क आसीत्। कलङ्क स गङ्गास्नानेन व्यपेयादिति श्रद्धया स प्रतिदिन खड्गहस्त गङ्गास्नानाय गच्छति स्म। एकदा मध्येमार्गं स्वामिन दयानद दृष्ट्वा सोऽपृच्छत्, "किन्नु भवान् गङ्गा अलौकिकशक्तिमती मनुते वा ?" प्रत्यवतत स्वामी "गङ्गा नदीरूपेण लोककल्याणकारिणी, किन्तु न तस्या ऐश्वर्यमलौकिकत्व वाऽभ्युपगच्छामि'। श्रुत्वैतत् उन्नमितभ्रू कर्णसिह पुनरपृच्छत् "तर्हि गङ्गास्नानात् पापनाश इति न विश्वसिति भवान् ?" स्वामी प्रोवाच, "भ्रात ! न नदीस्नानेन साधुदर्शनेन वा पाप प्रणश्यति। अस्माक कर्मभिरेव पाप पुण्य वा प्रलीयते,"। स्वामिनो धाष्टर्यमिद पश्यन् नृपश्चुकोप। कोशानिसार्य प्रहर्तुकाम खड्गमुदधरत्। स्वामी तु विना विक्षोभम् उन्नत खड्गमाच्छिद्य द्विधा विभज्य दूरमक्षिपत्। दयानदस्य विक्रमेण लज्जितो भूप पादमध्यपुच्छ कुक्कुर इव तूष्णीमपासरत्।

(७) मुगेरस्थले एकदा कौपीनमात्रधरो दयानदोऽग्निरथ प्रतीक्ष माण तद्विरामस्थले गतागत कुर्वन्नासीत्। तत्र च कश्चिद् गौराधिकारी सपत्निक उपविष्ट आसीत्। सन्यासिषु स्वभावत एवामर्षी स कौपीनधर स्वामिन सभ्रूभङ्गमपश्यत्। अशासच्च स्थानाधिकारिण तमपसारयितुम्। स्थानाधिकारी सविनय स्वामिनमुपसृत्याग्निरथागमनविलब च निवेद्य, कोष्ठान्तर्विश्रमितु न्यवेदयत्। किन्तु स्वामी सञ्चाररुचि प्रख्याप्य न तदङ्गीचकार। तत गौरदर्शन परिजिहासु स्थानाधिकारी तूष्णी स्वकार्य-निमग्नोऽभवत्। गौरस्तु स्वामिनो धाष्ट्र्यमसहमान पुनरपि स्थानाधि-कारिणमाह्वयत् स्वामिन नि सारयितुञ्च सावष्टम्भमादिशत्। स्थानस्वामी साञ्जलि पुनरपि स्वामिनमन्यत्र गन्तु न्यवेदयत्। विदितगौराकूतस्तु स्वामी तमभाषत –"वद मद्वचनात्त गौरापसद यदहम्, आदम–इव–समानो ऽस्मि।" (बाईवलेति खिस्तधर्मपुस्तके सर्वत पूर्व आदम–इवसञ्ज्ञकौ स्त्री पुसावीश्वरेण सृष्टाविति कथा वर्तते) स्वामिन प्रगल्भवचोभिरतितरा कोपपरित गौर विभाव्य, स्थानस्वामी तमवोचत्–'प्रभो ! नाय साधारण सन्यासी। अय किल प्रगल्भसत्त्वो लोकपूज्यो दयानन्दो वर्तते"। नामश्रवण-मात्रेण ससभ्रममुत्थाय गौर स्वामिनमुपजगाम। सविनय प्रणम्य, क्षमा याचित्वा च बहुकालसञ्चिताया स्वामिदर्शनकामनाया पूर्त्याऽमन्दमानन्द प्राकाशयत्।

दयानदसमये रूढिजालजटिलाद् हिन्दूधर्मादुद्विजमाना नवीनशिक्षा-दीक्षिता केचन विजेतृभिराङ्ग्लैरादृत खिस्तधर्ममाश्लेष्टुकामा अभूवन्। "मृषाप्रत्ययनिधान किल हिन्दूधर्मोऽतो न बुद्धिमतामुपादेय। तत्र हि पाषण्ड-पुम्भिर्धर्मव्याजेन ऋजुमतय प्रतार्यन्ते। परलोकादिभयेन च जनमनो निर्बली क्रियते। एतादृशी धर्मव्याजप्रवृत्तिरेव भारतस्य दैन्य तनोति। पारतन्त्र्य-मपि हिन्दुधर्मस्य नि सारताप्रसूत भवति। धर्मेणानेन नैका जातिभेदा, स्त्रीणा गृहैकशरणता, हीनत्वेन परिगणिताना जातीना नि सत्त्वता, शोषणञ्चो-द्भावितम्। अत प्रगतिवाञ्छुभि शीघ्रमय त्यक्तव्य" इति तै विचार्यते

स्म। एतत्प्रतिकर्तुं वेदादिप्राचीनवाङमयादुदारानन्यत्र सुदुर्लभान् विचारानाकृष्य प्रचार्य च नवीनशिक्षादीक्षितेष्वपि हिन्दुत्वाभिमान दयानदपुगवेन सधुक्षित । "न वय कस्मादपि नराद् हीना अपि तूत्तमस्य सस्कारराशेरधिकारिणो भवाम । अस्माक प्राचीना ऋषयो न सङ्कुचिता अपितु निखिल विश्व बन्धुभावेनापश्यन्। दूरदेशेष्वपि न सस्कृतिसाम्राज्य व्यधीतत। अतो दास्यभावे प्रविष्टान् सकुचितान् धर्मकल्पान्रूढीन् विसृज्य, ज्ञानैकराशि वेदञ्च सम्यागाकलय्य, द्रढीयसी परमात्मप्रीति, विश्वव्यापी बधुभाव, देवदुर्लभश्च पौरुषप्रकर्ष प्राप्तव्य' इत्युद्बोधिता राष्ट्रभक्ति स्वसम्मान भावना च दयानन्देन महर्षिणा। भारतैक्याय एका राष्ट्रभाषा भवत्वित्यपि व्याहृत तेन नैकश ।

एतेन यत्र यवनाना प्राबल्य हिन्दुन च सख्याह्रास प्रचीयते स्म, तत्र पश्चिमोत्तरभारते अत्युत्साहेन वेदभक्ति पुरस्कुर्वत आर्यसमाजस्य कार्य वेगेन प्रासरत्। दयानदश्चानुयायिना प्रबोधाय विरोधिनाञ्च मुखबधार्यैतान् ग्रयान् जग्रथ – (१) वेदभाष्यम् (२) स्वतत्रा वेदभाष्यभूमिका (३) सस्कारसग्रह (४) सत्यार्थप्रकाश । एतैर्ग्रन्थैः वेदाना नवीनदृष्ट्यार्थ प्राकाश्यत, हिन्दूधर्मोऽज्ञानप्रसूतरूढिमूल इति प्रवादश्च दूरीकृत । "हिन्दूधर्म समग्रमपि विश्वजन कुटुम्ब कलयति। समाजस्थितयेऽपेक्षित कर्मभेद । किन्तु न तावता प्राकृतिकी उच्चता नापि नीचता, दूरे खलु कस्याप्यस्पृश्यता। स्त्रियाऽपि विविधवदुपनीता वेदादिशास्त्राण्यधीत्य पुरुषवत् समाजश्रेष्ठा भवितु शक्नुवन्ति।" एतैर्विचारै हिन्दूधर्मपुस्तकेभ्यो नि सार्य प्रकाशितै खिस्त-इस्लामधर्मिणा हिन्दूधर्म दोषदर्शनबीजमेवोन्मूलितम्। येन तै क्रियमाणा हिन्दूना स्वधर्मप्रवेशव्यापार कुण्ठितोऽभवत्। सस्कृतस्य हिन्दीभाषायाश्च गभीरभाषारूपेणाध्ययन प्रोदसाह्यत। तेन च राष्ट्रभक्तिरपि नवीना स्फूर्तिमवाप।

महर्षिर्दयानद एकतो लोकाना कूपमण्डूकता परिहर्तुम्, अन्यतश्च स्वविषये हीनभाव त्याजयितु कृतसकल्प आसीत्। अतस्तेन नवीनेषु ज्ञानविज्ञान-

शाखास्वपि भारतीयं प्रवर्णभाव्यमिति मत्वा श्यामजी कृष्णवर्मा नामा मेधावी जर्मनदेश विज्ञानमध्येतु प्रेषित आसीत्।

"आ नो भद्रा क्रतवो यन्तु" इति वेदघोषणा मूर्तिमती द्रष्टुकामोऽभवन्महर्षि ।

एव विरोधिदल हुङ्कृत्य विद्रावयन्नपि महर्षिरय सर्वेषु समभाव प्रीतिप्रवणचेता क्षमाशीलश्चासीत्। नूनमजातशत्रुरन्वर्थनामाभवत् दयानद ।

## अलौकिकी क्षमा

राजस्थानप्रदेशे हिन्दूधर्मसबधिनी नवीना दृष्टि स्फूर्ति च प्रसारयितु तत्र तत्र व्याख्यानानि कुर्वन् पर्यटति स्म महर्षि । तथा कुर्वन् स जोधपुर-नृपेण यशवन्तसिहेन निमत्रित । तत्र राजपरिवारस्यानेके सदस्या पूर्वमेव दृष्टस्वामिन तस्मिन् बद्धगौरवा अभूवन्। प्रतिदिन तत्र राजप्रासादे सुदीर्घ काल वेदानाश्रित्य स्वामी व्याख्याति स्म। एकदा स राजसमीप उपविष्टा नानजान-नाम्नी गणिका ददर्श, दृष्ट्वा च ता प्राप्तक्षोभ स्वामी सभ्रूभङ्ग राजानमुपालभत। 'सिहस्य कुक्कुरीयोग इव नराधिपस्य गणिकायोग' इति च प्रतिपाद्य, त सुतरामभर्त्सयत्। प्रभावमूर्ति हिमवदक्षोभ्य च दयानद किमपि प्रतिवक्तुमक्षमो नृपो नतशिरा बभूव। किन्तु विभववतामग्रेसरा मानघ्ना च सा गणिका न तन्ममर्ष। सा हि जगन्नाथनामान स्वामिसूद पुष्कलेन धनेन प्रलोभ्य विष दापयितुमायोजयत्। तथा कृते च सूदेन, स्वामी कतिचिद्ग्रासान् गलन्नेव विषमिश्र भोजनमित्यबुध्यत्।

पूर्व नैकशो विष भुक्त्वा योगक्रियाभिस्तत्प्रभावो नाशित आसीत्स्वामिना। अस्मिन्नपि समये तथा कर्तुमयतत। किन्तु हन्त। अत्युग्रस्य शीघ्रव्यापिनश्च विषस्यास्य दुष्प्रभाव प्रतिरोद्धु न तेन शक्तमभूत्। स्वस्यान्तकाल समीपस्थ विदित्वा करुणाकर स्वामी जगन्नाथमाजुहाव। स खलु स्वकर्मणा परितप्यन् किङ्कर्तव्यतामूढो वेपमानगात्र स्वामिपादौ गृहीत्वा तौ नेत्राश्रु

भिरसिञ्चत्। त हस्तेनोन्नमय्य, दु सहविषेण पीडघमानोऽपि स्वामी कृपापूर्णेन स्वरेणाभापत –"मूढ ! किमिति त्वयेद पापमाचरितम् ?" इत्युक्त्वा हस्तगत द्रव्य प्रदर्श्य पुनरुक्तवान् "भद्र ! गृहाणैतद्धनम्। एतेन तूर्णमेव हिमगिरिस्य नेपाल प्रतिपद्यस्व। विलबे कृते राजगृहितस्य ते वधो निश्चित"। इति करुणामयस्यास्यापारा करुणा विभावयन् जगन्नाथ आत्मान धिक्कारशतैर्वर्पयन् निम्नानन शीघ्रमेव निर्गतोऽभवत्।

अथ अर्बुदपर्वत नीत स्वामी। भैषज्यसेवया तत्र किञ्चिदिव लब्धस्वास्थ्यश्च पुन अजमेर प्रापित। तत्र व्याधि पुनरपि प्रकुपितोऽभवत्। सर्वतो देशात् तच्छिष्यास्तत्राधावन्। १८८३ खिस्ताब्दे अक्तूबरस्य ३० दिने दीपावलीपर्वणि शिष्यशतावृतो महर्षि स्वच्छासन उपविश्य, गायत्री वेदमन्त्राश्च भावपूर्णेन स्वरेणागायत्। ततश्चोर्ध्वदृष्टिरभापत–'सर्वात्मन् ! करुणाकर ! जीवननाटक मे समाप्तमवैमि। पुनश्च त सकल्पानुसार त्वा शरण प्रपद्ये"। एव भापमाण शान्तमूर्ति प्राणानायम्य किञ्चिदतिष्ठत्। तता विसृष्टप्राणैश्च सह तदीय दिव्य ज्योतिरपि महाज्योतिषि सम्पन्नमभवत्।

---



# रामकृष्णः परमहंसः

सर्वे धर्मा परेशस्य प्राप्तये भिन्नमार्गदा ।
इति स्वानुभवाद्वक्ति रामकृष्णो महामनाः ॥

उपसो दिवस्पतिरिव तपःपूतायां चन्द्रमणिदेव्यां सिद्धसरूपो बालः प्रादुर्बभूव। अस्य पितुर्नाम खुदिराम चक्रवर्ती आसीत्। बंगप्रदेशस्य हुगलीमण्डलान्तर्वर्तिनि कमरपुरग्राम एषां वासभूमिः। खुदिरामः पूर्वं 'देरे' ग्रामेऽवसत्। तत्रत्यो भूस्वामी एकदा कस्मिंश्चिदभियोगे खुदिरामं मिथ्याभाषणेन स्वं समर्थयितुमाज्ञापयामास। अवदच्च "यदि त्वं तथाकर्तुं नानुमन्यसे, तव जीविकैकसाधनं भूमिरपहरिष्य" इति। सत्यप्रियः खुदिरामो मृषाभाषणाद् भूमित्यागमेव वरं मेने। अथ परित्यज्य च देरेग्रामं सपरिवारः समीपवर्ति कमरपुरं जगाम।

कमरपुरग्रामे स एक एव ब्राह्मणपरिवार आसीत्। गोपादिकर्मकरभूयिष्ठे कमरपुरे वसन्नप्ययं खुदिरामः विप्रसहजान् सदाचारान्, परमात्मप्रीतिं, साधुसेवां, परपराधर्मञ्च पूर्ववदेव पर्यपालयत्। तस्य रघुकुलश्रेष्ठे

भगवति रामचन्द्रे परमा भक्तिरासीत्। जगन्नाथपुरीमार्गेऽभवत् कमरपुरम्। अतस्तत्र यात्रिका अविरत गतागत कुर्वन्ति स्म। बहूना साधूना सन्यासिना च तद् श्रमविनोदनस्थानमभूद्। खुदिरामस्तेषा सगत्या, सेवया चास्मन पुण्यराशि ज्ञानसञ्चयञ्च वर्धयते स्म।

अथ कालक्रमेणाय द्वौ सुतौ द्वे च सुते अलभत। पञ्चमी कनिष्ठा सन्तति पुन आसीद्यस्य नाम 'गदाधर' इत्यक्रियत। अस्य जन्मन पूर्वं गदाधरा विष्णु "अह ते सुतरूपेणावतरिष्य" इत्यभणत् स्वप्ने खुदिरामम्। तद्वच प्रत्ययेन बालस्यास्य नाम तथा विहितमभूत्। अस्य जन्म १८३६ खिस्ताब्दस्य द्वितीय-मासस्य २० तमाया तिथावभवत्। बालोऽय पञ्चहायन एव पुराणादिकथा यथावद्वक्तु शशाक। यात्रानिमित्तमागताना विदुषा विवादकाले तेषामप्य-विदितान् विषयान् समाधानवचासि च वदतोऽस्य बालस्याप्रतिमया मेधया वचनवैचक्षण्येन च सर्वेषाम् आश्चर्यमभवन्। सकृच्छ्रुतमपि सो यथावत् सस्मार। शालायामध्ययनाय प्रहितस्यास्य मनो नारज्यत पाठविषयेषु। केवलमय पित्रादिमुखाच्छ्रुतानि परमभक्तचरितानि, भक्ताचाराश्च श्राव-श्रावममादत। अध्ययनान्तरान्चोद्विजते स्म। वगभाषाया लिपिमात्रमधीत्य, ग्रामगुरून् प्रणम्य ततो विरतो बभूव। अथाय गदाधर शास्त्रपण्डितान्, काषायधारिणश्च सन्यासिन उपसृत्य धर्मतृषामुपशमयितु प्रायतत। किन्तु तेन दृष्ट यदीमे शास्त्रव्याख्याने, परमात्मभक्तेर्गौरवप्रतिपादने, ज्ञानवैरा-ग्यादीना माहात्म्यवर्णने च यथा शूरा भवन्ति न तथा तदनुरूपाचरणे। [illegible] वाक्कर्मणो सवादा दृश्यते। अतस्तेषु मन्दादर परमार्थ[illegible] दिङ्मूढ, बुद्धिमानपि मत्त इव उद्देश्यशून्य समचरत्।

अचिरादेव तस्य पिता दिवं प्रस्थित । ज्येष्ठश्च रामकुमाराख्यो भ्राता कुटुम्बभरणोपायमनुचिन्त्य बगराजधानीं कलकत्तामहानगरीमगच्छत् । तत्र स खलु रामकुमार कृतविद्य सन् शालामेकामचालयत् । किन्तु न तेन पर्याप्त धनमार्जत् । येन व्यवसायान्तरलाभ प्रतीक्षते स्म ।

## दक्षिणेश्वरगमनम्

अथ कायस्थजातीया धर्मपरा रासमणिदेवी नाम्नी विभववती काचिन्महिला रामकुमारमाह्वयत् । तया किल गगाकूले नगरपरिसरे दक्षिणेश्वराख्ये स्थाने कालीदेव्या मदिरमेकं निरमीयत । तदर्थं च सा सात्त्विक विद्यासदाचारसम्पन्नं ब्राह्मणमर्चनकर्मणेऽपेक्षते स्म । सर्वतो दृष्ट्या च रामकुमार तत्कर्मयोग्यममन्यत ।

रामकुमार कालीमन्दिरेऽर्चकाधिकार निर्वोढुमङ्गीचकार । किन्तु रामकृष्णापरनाम्ने गदाधराय तन्नारोचत । स खलु तदा ब्राह्मणाचारविषये परपराप्राप्ताया रूढे परिपालन परम धर्मममन्यत । ब्राह्मणस्य धर्मं तद् भिन्नजातीयस्य किङ्करभावे लुप्यतीति तस्य विश्वास । भ्राता कुटुम्बभरणायेदमावश्यकमिति बोधितश्च वधुप्रेम्णा कथञ्चित् तदन्वमन्यत । अथापि स तत्र भोजन न जग्राह न च स्वय तत्रत्य किमपि कार्यमकरोत् । धनलाभाय न तस्य काऽपि प्रवृत्तिरभूत् ।

एव केचन वर्षा व्यतीता । अथ तस्य भ्राता शरीरास्वास्थ्याद् देव्या अर्चनादिकर्म कर्तुमसमर्थोऽभवत् । भ्रात्राऽनुनीतश्च रामकृष्णो देवतार्चनकार्यमप्यङ्गीचकार ।

स खलु यद्यत्कार्यं चकार तत्परमया श्रद्धयैव चकार । अतो देव्यर्चना कुर्वतोऽस्य मनो देवी साक्षाज्जननीमिवाभावयत । देव्यै समर्प्यमाणानि पुष्पाणि वस्त्रालकारनैवेद्यानि च देवी गृह्णात्येवेति भावप्रवणमासीत्तन्मन । स हि ता प्राणन्ती विश्वजननीमाकलयत् । पूजा विधाय, मातर ता शिशुरिव स स्वभावित् वात्सल्येन स्नपयितु च प्रार्थयत् । एव कुर्वतस्तस्य कालभानमपि

नासीत्। तदवस्थं त पश्यन्तो जना विविधवितर्का अभूवन्। केचन त
हतप्रज्ञं मत्तमपरे च वस्तुतो भक्त्याप्लावितचेतसमकल्पयन्।

## शारदादेव्या विवाहः

तादृशीमवस्थां गतस्य तस्य ज्येष्ठभ्राता जननी च तच्चेतोभ्रंशनिवारणाय विवाहमेवोत्तममुपायममन्येताम्। तदनुरूपवधूमार्गणे च प्रक्रान्ते स स्वयमेव रामचन्द्रमुखोपाध्यायस्य पञ्चवर्षस्कां शारदामभ्याख्यां दुहितरं सकलदिव्यगुणोपेतां स्वभार्यां भवितुमेवोत्पन्नां निरदिशत्। तया सह तस्य विवाहश्च सम्पन्नः।

रामकृष्णः काश्चन स्त्रियः स्वभावत एव दिव्यरूपा अपराश्च तद्विपरीता अकलयत्। प्रौढे वयसि स्थिते तस्मिन्नेकदा पञ्चषपुत्रा रम्याकृतिः काचिल्ललना देवीमन्दिरमागात्। तां दृष्ट्वैव रामकृष्णस्तस्या दिव्यभावमावेदयच्छिष्येभ्यः। स्वाभिप्रायं प्रमाणयितुं च तस्याः पुरतो धूपदीपे निवेश्य चरणयोः पुष्पाणि समर्पयितुमादिदेश। तथा कुर्वत्सु शिष्येषु, हन्त! सा पुरन्ध्री सद्य एव समाधिमग्नाऽभवत्। रामकृष्णश्च कालीस्तवेन पुनस्तां प्रकृतिभावमापादयत्। एतादृशं अनेकशो दृष्टचरमभूत् तत्सहवासिभिः।

अनन्तरं लोकप्रथितप्रभावे तस्मिन्ननेके धर्मानुष्ठानबुद्धयस्तमुपासर्पन्। दृष्टमात्र एव जने स स्वशिष्यान् तस्यान्तरस्थितिमबोधयत्। काश्चन अचिरादेव साक्षात्कारयोग्यानपराश्च बहुजन्मप्राप्यपरमार्थान् न्यवेदयत्। एकदा स जनमेकं दृष्ट्वा अवोचद्—"अयं पूर्वजन्मनि राजाऽभवत्। प्रचुरान् भोगान् भुक्त्वा, भोगासारतामवगत्य, स पूर्वदेहत्यागात्पूर्वमेव विरक्तिमभजत्। अतोऽस्मिन्नेव जन्मनि पक्वकषायो मुक्तिं लप्स्यती"ति।

## साक्षात्काराय आक्रन्दः

विवाहविधिं समाप्य, पञ्चवर्षस्कां शारदां रूढ्यनुसारं पितृगृह एव विसृज्य स, गन्तव्यवर्त्मना दक्षिणेश्वरमन्दिरम्। मातृभ्रातृसम्भाविता लोकव्यवहार-

प्रीतिर्न विवाहात्परमपि लेशतोऽपि तमस्पृशत्। स किल पूर्वापेक्षयाऽप्यधिकवैकल्येन जगदवामस्तौषीद्। तामात्मरूपमदर्शयन्तीञ्च विभाव्य, विकलविकल रोदिति स्म। पूजाकर्मण्यपि स विभ्रान्तावस्थ एव प्रावर्तत। कदाचिद् देव्यै निवेदनीय वस्तु स्वस्मायावेदयद् वहिर्वा निचिक्षेप। कदाचित्पूजादिकर्मानारभ्यैव मन्दिरभूमौ लुठन्, अश्रुपरिप्लुतनयन. कोणात्कोणान्तरमुपासर्पत्। कदाचिच्चन्दनादिरूषितशरीरोऽट्टहासै प्रेक्षकाणा भीतिमजनयत्। बहुश समाप्तपूजाकर्मा देव्या सम्मुखमुपविश्य बाल इवाचुक्रोश :– "मात.! अन्यदपि दिनमेकं गतम्। न च स्वमात्मानं प्रकटयसि। न च त्वद्विरहाकुलं शिशुमिमं क्रोडे करोषि! केयं ते रीतिः! किम् मयापराद्ध यत्तव दर्शनसुखान्मा वञ्चयसि!" एव विलप्य कदाचित्स तदवस्थ एव निद्रा समाधिं वा लेभे। तस्य सर्वोऽपि व्यवहारोऽदृष्टपूर्वोऽवितर्क्यश्चासीद्। अत कथङ्कार स प्रकृतिं प्रापणीय इति किङ्कर्तव्यतामूढा अभूवन् तत्कर्मसाक्षिणो जना।

तादृगवस्थ त दृष्ट्वा राज्ञी रासमणि, मन्दिरकार्यद्रष्टा तस्या जामाता मथुरानाथश्च जनान्तरमर्चाकर्मणि नियोजयामासतु। अस्य व्यवहारो न मत्तविजृम्भित न चावेशप्रसूत इति ते सम्यगवेदिषाताम्। यथा यथा रामकृष्णव्यवहारा अलौकिकतामवागाहन्त तथा तथा सहृदययोस्तयो तस्मिन् प्रीतिरवर्धत। त र्हि ते दिव्यात्मान वस्तुत परमार्थपरायण देवीदर्शनलालसञ्चामन्येताम्।

दिने दिनेऽस्य देवीवियोगदु खमधिकाधिकमवर्धत। एकदा स मातृदर्शनशून्यस्य देहहतकस्य परित्यागमेव साधु मन्वानो भृश सतप्त आसीत्। मातृदर्शनहीन जगदिद शून्यमेव, दु खभूयिष्ठमेव च प्रातीयत तस्मै। असह्यमभूत्प्राणाना धारणम्। तदेव घर्मदग्धाया भूमौ वृष्टिरिव, अतर्कितपूर्व, शशिशीतल, सूर्यसहस्रसकाश मातुर्दिव्य रूप ददर्श। क्षणप्राप्तनष्ट तद्दिव्य रूप पुन पुनर्द्रष्टु स तन्मय सञ्चचार। तदेकसाध्यस्य च तस्य क्रमेण यथेच्छमसकृद् दर्शनलाभ समजायत। एतेनास्योन्मादो शरन्नदीपूर इव

विगलित । कदाचिदस्य वितर्कोऽभवत् "किन्तु सत्यमेवाहं मातुर्यथार्थदर्शनं लभे, उताय मे विभ्रम स्यात् ?" अथ च स एवमचिन्तयद् "यद्यहममुकं जनममुकस्मिन् समयेऽत्रागत पश्येय तर्ह्येव साक्षात्कारघटनामवितथां कलयेय ।" एतादृशोऽस्य सकल्प सदैव सिद्धोऽभवत् । एकदा सोऽचिन्तयत् "यदि रासमण्या विवाहितम् अत्र चानागतपूर्वं कन्याद्वयं श्वो मध्याह्ने पुरोवर्तिनो वटवृक्षस्याधस्तादागत्य मा पश्येदवितथं मन्ये मयानुभूतं मातृदर्शनम् ।" इति । तत्तथैव सवृत्तम् । असूर्यम्पश्य तद् कन्यायुग्म तदैव रामकृष्ण द्रष्टु सोत्कण्ठ सत्, भर्तृकुलजानामनुज्ञा लब्ध्वा, सकल्पित एव समये वटवृक्षमाजगाम । असभावितपूर्वं च त नाम्नाऽऽहूय, मधुरगिरा एवमभिदधे "मा व्यथिष्ठा, त्वयि परमकारुण्य भजति भगवती काली" इति । एतादृशै प्रसङ्गैस्तस्य चेतो वीतशङ्क प्रसन्नञ्चाभवत् ।

## कृतसाक्षात्कारव्यवहार.

ततस्तस्य मातृदर्शनवेला दीर्घदीर्घतराऽजायत । शास्त्रेषु साक्षात्कृतदेवताना यानि चिह्नानि वर्ण्यन्ते तानि तस्मिन्नदृश्यन्त । स कदाचिद् देव्यै आनीतानि गन्धपुष्पाणि स्वस्मिन्नेव समारोपयत् । स्वमेव च देवीमध्यापयत् । एव कुर्वतोऽस्य शरीर हर्षतुन्दिल व्यराजत । असकृत् सुदीर्घ समाधि चाध्यगच्छत् । एकदा देव्यै आनीतानि वस्तूनि स्वयमेव धारयन्त त मथुरानाथ उपालभत । किन्तु स समनन्तरमेव त शिवरूपिणमपश्यत् । आश्चर्यमग्नश्च मथुरानाथ तत पर रामकृष्ण परमात्मरूपिणमेवाधारयत्, पितृयोग्येन च बहुमानेन तस्मिन्नवर्तत ।

ततश्च कादाचित्केन देवीदर्शनेन नातृप्यद् रामकृष्ण । स खलु परमात्मनो विविधभक्तिमार्गैरुपास्य विविध रूप द्रष्टुमना द्वादशवर्षाण्यगम्य तपश्चचार । तदा वै तस्य सकलमिद विश्व विपरीतमिव प्रातीयत । भूयोभूय समाधिमग्न स कालकला नावेदीत् । अहर्निशं शून्येन चक्षुषा निरन्तर किमपि पश्यतोऽस्य निद्राऽऽभा दु शक आसीत् । देहो ज्वालापरीत इवा-

नारत सतप्तोऽवर्तत। असह्यामिमावस्थां प्रतिपन्न स कदाचिदेव मातरम भणत् "मात ! त्वदायत्तस्य मे किमिद सवृत्तम्? अपि नाम त्वदारा धनस्येद फलम्? किं न पश्यसि मे विकलताम्?" इति। तदा वत्सना माता प्रेमपूर्णेन वचसा त समाश्वासयत् "वत्स! देहबुद्धि तदासक्तिञ्चावि लाप्य कथ नु त्व परम तत्त्व दिदृक्षसि?" श्रुत्वैतत्तस्य चेत प्रकाशपुञ्जेन पूरितभूत्, अवोचच्च-"मात ! त्वमतीव कृपालुरसि मयि। मर्त्या खलु दोषभूयिष्ठा भवन्ति। अतो नाहमित पर तान् गुरून् करिष्ये। त्वमेव मा पर मार्गमुपदिश" इति। सा "आम्" इत्यवोचत्। एतत्सर्वं पूर्वानुभूत मन्तरङ्गशिष्येभ्य कालान्तरेण वर्णयति स्म रामकृष्ण। सोऽकथयत् नाह तत पर कदाचिदपि देहविषयक किमप्यस्मरम्। मम भ्रातृसुतो हृदय प्रतिदिनमाहारमानयति स्म। कदाचिदेव स मा स्वल्पान्नस्य भक्षणे प्रवर्तयितु शशाक। तदा तदा मार्जनीहस्तोऽह मन्दिरभृत्यावासममार्जयम्। अयाचञ्च मातरम्-"मात ! ब्राह्मणोऽहमिति देहाभिमान मे विनाशय। एते कर्मकरा शूद्रा अन्त्यजा वेति विचारोऽपि न कदापि मा स्पृशतु। भवत्येव सर्वरूपैर्वर्तस इति मेऽविचलिता बुद्धिरस्तु।" इति।

कदाचित् स सुवर्णनिष्कान् मृत्पिण्डाश्च एकैकस्मिन् हस्ते धृत्वा गङ्गा कूल उपविश्यात्मानमेवमभणत् "भो चेत ! दक्षिणहस्ते मे सुवर्णनिष्का भवन्ति यै भक्ष्यादीनि भोगोपकरणानि लब्धु शक्यन्ते। येषु सत्सु सुजना सम्मानयन्ते। एतैर्दरिद्रेषूपकारोऽपि कर्तुं शक्यते। किन्तु नैतै कदापि तेऽज्ञान व्यपेयात्, न च त्वमेतैरात्मप्रकाश विन्देथा। अत एते मृत्पिण्ड तुल्या एव।" इति भणित्वा च स मृत्पिण्डानिव निष्कानपि गङ्गाजलेऽक्षिपत्। तेषु दिनेषु तस्मिन् गाढभक्तिमथुरानाथ सुवर्णतन्तुसभृत विचित्रवर्णं बहुमूल्य काश्मीरोर्णादुकूल जाह्नवीतटे उपविष्टस्य तस्य स्कन्धे न्यवेशयत्। स खलु तद् दृष्ट्वा पूर्व जहर्ष, अवालोकयच्च तत् प्रेमपूर्णेन चक्षुषा। किन्तु हन्त! अपरस्मिन्नेव क्षणे तेनैव तटस्थ मल मार्गयितुमारभत, अभाषत च- "अनेन खलु अभिमान प्रवर्धते न सच्चिदानद ब्रह्म प्रकाश्यते। अतो नास्य भवति भेदो मलिनचीवराद्"। इति।

## ब्राह्मणयोगिनीसंगमः

रामकृष्ण शिष्येभ्य स्वीय प्राक्कालिकमनुभव वर्णयन्नब्रवीत् "तदा त्वहमननुभूतपूर्वं सर्वशरीरे दाहमन्वभवम्। तमुपशमयितु गङ्गाजल आकण्ठ निमग्नोऽतिष्ठम्। शिरसि चार्द्रवस्त्रमवेष्टयम्। असह्य खल्वेतदभवत्। तदैकाऽविदितपूर्वा ब्राह्मणी समागता। दिनत्रय यावच्चन्दनद्रवालेपेन, पुष्पमालापरिधापनेन च सा दाह तमद्रावयत्"। इति। उत्तुङ्गा लावण्य-मूर्ति, अद्भुतस्वरूपा च सा किल ब्राह्मणी परमविदुषी, जिह्वाग्र-नृत्यदनेकाग्रया वादेषु च प्रतिवादिभयकराऽवर्तत। शरीरसुषमेव तस्या प्रज्ञापि सर्वजनाश्चर्यकरी बभूव। कोकिलकठी, सगीतविशारदा, विरत-योगचमत्कारशक्ति सा योगिनी रक्तवस्त्रावृता नि शङ्क सर्वत्र सञ्चचार। लोकानुद्दर्तुं लोकान्तरादवतरिता देवतेव साऽन्वावलिताशमना साधकानुप-जगाम। पूर्वमेव रामकृष्ण कालीदेव्या तदागमन तद्द्वारा च पूर्णयोगशिक्षा-लाभ सूचित आसीत्। प्रथमदर्शन एव तावन्योन्यमजानताम्। आगत-मात्रैव सा रामकृष्णमवोचत् "पूर्वमेवाह त्वां (अन्यौ) प्रापम्। चिरात् त्वा च मार्गयन्त्यद्याविन्दम्।" तदवधि नान्य कोपि रामकृष्णस्य परा भक्ति-मनुपमाञ्च शुचितामबुध्यत। अतस्ता तयाविध व्याहरन्ती श्रुत्वा मुदम-मरज्यत् तच्चेत। येन तस्य तस्या परमादरोऽजायत।

तत्रत्या सर्वे जना देव्यास्तस्या वैदुष्येण, अनुपमयोग[illegible] च विस्मय-विमूढा आसन्। किन्तु यत्सा प्रमत्त रामकृष्ण [illegible] मनं तद्वेत्तु ज्ञातुमसमर्था अभूवन्। ब्राह्मणी सा रामकृष्णस्य [illegible] निवारयितु कांश्चन वैष्णवलिपिग्रन्थानानाययत्। भक्तश्रेष्ठानां च [illegible] यादृग् चरित वर्ण्यते तादृशमेव रामकृष्णस्याप्यासीदिति [illegible] सा, रामकृष्णस्य परमभक्तत्वमबोधयत्। 'पूर्वं राधाया [illegible], [illegible] चैतन्यगौराङ्गोऽपि तामेव मतावस्थामन्वभवत्' इति [illegible], [illegible] रेवोपायै रामकृष्णस्य [illegible]। [illegible]

वसस्यामेव केषुचिद् दिनेषु रामकृष्णोऽनिवार्यां क्षुधामन्वभवत्। अस्य भूरि भक्षणेनापि न तत्क्षुधा न्यवर्तत। एतावान् भक्षितोऽन्नराशि क जीर्यतीति सर्वे विस्मयन्ते स्म। सा नु योगिनी रामकृष्णप्रकोष्ठ विविधै रुत्तमान्नै पूरितमकारयत्। कृते तथा बहुलमन्न परितो पश्यतोऽस्य क्षुन्निवृत्ता।

सा विप्रविदुषी तत्र काश्चन वर्षानवसत्। अशिक्षच्च विविधा योगक्रिया याभिर्देहमनसोर्वशित्वमाप्यते। आवेगा जीयन्ते। भयशून्या स्थितिरवाप्यते विचारग्रहश्च निवार्यते, येन सत्य साक्षात्कर्तुं शक्यते।

अथाष्टाङ्गयोगमधिकर्तुं प्रावर्तत रामकृष्ण। बहुवर्षसाध्यानि किमु बहुजन्मसाध्यानि सकलानि योगाङ्गानि स परिमितेष्वेव दिनेष्वात्मायत्तानि विदधे। नैके योगश्रेष्ठास्तस्य तादृश योगमहिमान दर्शदर्श चकितचकिता अभूवन्। एकदा रजन्या योगसाधनाप्रवृत्त सो मुखाद्रुधिरान्वित सूत्रद्वय निर्गत पश्यन् भीत भीत इवासीत्। तत्र स्थिता सा विप्रयोगिनी तद् भयहेतु रक्ताक्तसूत्रद्वय विदेहमुक्तिरोधकमबोधयत् अवोचच्च "अस्मिन् पूर्णयोग समाधौ वर्तमानस्यात्मा सद्य एव देह विहाय ब्रह्मभाव गच्छति। यो हि पूर्णयोगोऽपि जगत्कल्याणाय शरीरधारणमपेक्षते स ईश्वरेण समाधौ तात्का लिकाद् देहत्यागाद् निवार्यते। नून भगवतो निवारणसकल्पशक्ते परिचायक भवति तत्सूत्रद्वयम्। त्वया रामकृष्णेन नैके परमार्थप्रिया पथप्रदर्शनेनानु ग्राह्या अतो न तव सद्योमुक्तिरभीष्टा जगदीश्वरस्य।" इति पुनश्च साऽब्रवीत्— "सद्योमुक्ति लभमानस्य तु समाधौ शीर्षे वेगेन रुधिर सञ्चीयते। न च ततो निवर्तत। तदवस्यश्च ध्यानी परब्रह्मणि सम्पन्न सन्न देहेन्द्रियादीनि पुन प्रपद्यते। तस्य शरीरकार्यं विरत भवतीति समाधिस्थ एव शरीर जहाति" इति रक्तसूत्ररहस्यमावेदयत्सा समाधितत्त्वकोविदा। एव योगिन्या शिक्षितु शक्य सर्वमपि ध्यानरहस्यमवेद्रामकृष्ण। किन्तु न तावतैव स आत्मा नमाप्तकाममन्यत। स खलु वेदान्ते प्रतिपादित चराचररूपि ब्रह्म स्वाभेदेन साक्षात्कर्तुमकामयत। न च स्वय तथा कर्तुं प्राभवत्। अत पुनरपि विकलमभूत् तन्मन। व्यतीताश्च तदवस्थस्य केचन हायना।

# तोतापुरीसंगमः

अथैकदा निर्हेतुकं परिभ्रमन् दिगम्बरः कश्चित् तत्र समागतः । जन्मना दाक्षिणात्यः, तारतुङ्गः, वृषस्कन्धश्चायं सन्यासी तोतापुरीनाम्ना प्रसिद्ध आसीत् । बाल्य एव न्यस्तसर्वोऽप्य विरागी नैकान् गुरून् संसेव्य, विविधाश्च साधना अनुष्ठाय, वेदान्तोपदिष्टं ब्रह्मात्मैक्यं साक्षादकरोत् । न स कदापि गृहेऽवसत् । ग्रामादवासाय प्रार्थितोऽपि स आकाशैकावृते स्थानेऽवात्सीत् । न वर्षा, न ग्रीष्मप्रचण्डप्रतापः, नापि हिमकरवर्षा विन्ध्यानुकारिणं तं चालयितुमपारयन् । न स कमप्यन्नमयाचत । पवन इव निर्बन्धः पावक इव च पवित्रः सो न कुत्रापि दिनत्रयमुवास । परमार्थप्रवासिनः य कमपि दृष्ट्वा स्वयमेव तमुपजगाम । नूनं मूर्तिमद्वेदान्तराशिरिव स प्रज्ञावता प्रतीयते स्म ।

गंगोपकण्ठे निश्चलमुपविष्टं रामकृष्णं दृष्ट्वैव स तं वेदान्ततत्त्वसाक्षात्कारपात्रं, बीजं प्रतीक्षन्तीं सद्यःसिक्तां भूमिमिवामन्यत । उपसृत्य चाब्रवीत् "वत्स ! जिज्ञाससि त्वं परमसत्यम् ? आगच्छ दर्शयामि ते तदुपायम् ।" जननीं कालीं पृष्ट्वैव सर्वं कुर्वता रामकृष्णेन "अम्बां पृष्ट्वाऽऽगच्छामि । नाहं कर्तव्यं वेद" इत्युक्त्वा गतम् । कैश्चिदेव क्षणैः प्रतिनिवृत्य च साञ्जलिः स "सन्नद्धोऽस्मि" इत्यभणत् । तोतापुरिस्तं ध्यानप्रकारं निवेद्य तदनुष्ठाननियमान् ग्राहयामास । दिनत्रयाभ्यासेनैव रामकृष्णो निर्विकल्पं समाधिं प्राप । तोतापुरिस्तद् दृष्ट्वा विस्मयमूढः अवोचद् "यं नन्तु मया चत्वारिंशद्वर्षाणि कठोरं तपस्तप्त्वा स समाधिस्त्वया दिनत्रयेणैव लब्धः । नाहमात्मानं ते गुरुं कलये । नूनं त्वमेव मे गुरुरसि" । अशिक्षच्च बहून्याध्यात्मिकानि रहस्यानि सो रामकृष्णात् । रामकृष्णसंगमनुध्यश्च स प्रथममेव एकत्र स्थले एकादशमासानवात्सीत् ।

तोतापुरिः सदैव स्वसन्निधौ स्वल्पमग्निपात्रमधरत् । अग्निं च तं परमं मेध्यमकल्पयत् । एकदा समशीलौ तौ तत्त्वचर्चानिमग्नावास्ताम् । तदैव तत्रायातः कश्चित् कर्मकरः पात्राग्निना तमाखुशलाकामज्वालयत् । धाष्ट्र्येनानेन क्रुद्धस्तोतापुरिस्तं भृशमतर्जयत् । तद् दृष्ट्वा सस्मितो रामकृष्णस्तं

प्रोवाच–"सर्वं खल्विद ब्रह्मेति भवानुपदिशति। चर्मकरोऽस्य किं ब्रह्म न भवति? कथम् ज्ञानिनो भवत उच्चावचबुद्धि?" श्रुत्वैतत् प्रकृतिगतस्तोतापुरि वोचत् "सत्य भणति भवान्। नात पर कदापि मा श्रोत्र चाण्डालस्पृष्ट द्रक्ष्यति।" वेदान्ती तोतापुरी रामकृष्णस्य कान्तिभक्तिम ज्ञानप्रसूतामवल्पयत्। "ब्रह्मात्मैक्यदर्शनमेव तत्त्वसाक्षात्कार। सा एव चरमा प्रकृष्टा च स्थिति। प्रतीकोपासना त्वविद्यावतामनुरूपा। न सा युज्यते ब्रह्मविदि"–इति। रामकृष्णस्त प्रत्यभापत "यावच्छरीरादिसबधो ऽनुवर्तते तावद्ब्रह्मानुभूतिर्विचारमात्रस्थिता मनोमात्रग्राह्या च भवति। समेषामपि मनसा समष्टिभूता च भवति जगन्माता काली। एव स्थिते कुत्रास्तेऽसगति कालीसमाराधने?" इति।

अथ तोतापुरावन्यत्र गते, रामकृष्ण स्वयमेव निर्विकल्पसमाधिमास्थाय परब्रह्माभेदमन्वभवत्। स तदनुस्मरन्नेकदाऽब्रोचत्–"षण्मासान् यावदह निर्विकल्पानुभवपरायण आसम्। तादृशी दशामापन्नो ध्यानी प्राय शरीर न धत्ते। न हि क्षमते तच्छरीर तदवस्थमात्मान धर्तुम्। किन्तु मे शरीर घटकाशा सत्त्वगणैकवटिता अभूवन्। अतो नाविशीर्यन्त ते। तेषु दिनेषु नाह बाह्य किंचन वेदिषम्। मम देहोऽन्नग्रहणाभावकारणाद् विघटितो ऽभविष्यत्। किन्तु तदा कश्चिद्योगी समागत। स मे स्थितिमविदत्। स च मां बलात्कारेण ग्रासानग्राहयत्। कदाचित् कृतेऽपि यत्ने नादन्त मा समाधिभङ्गायाताडयत्। कदाचित्तथाकुर्वन् स भक्ष्यदाने सफलोऽभवत्। कदाचिच्च मा समाधावेव पुन सर्पन्त पश्यन् हताश समजायत। षण्मासेष्वेतादृशेन व्यवहारेण मे शरीरमतिसाराख्याधिग्रस्तमभवत्। तेन क्षीणश्च पुनरपि साधारणी जीवनस्थितिमध्यगच्छम्" इति।

तदनु स वैष्णवभक्तैर्गृहितेन पथा भगवन्त साक्षात्कर्तुमारब्धवान्। भक्तिवाङ्मये निर्दिष्टा नवधाभक्तिमात्मसात्कर्तुमियेष। तत्र व्रजगोपीना चरितमनुकुर्वाण स नारीवेष धृत्वा राधेव कृष्णैकरति कृष्णप्राप्तिमेवोद्दिश्य गोपी

व्यवहारमन्वतिष्ठत्। एवं कुर्वाणश्च विस्मृतात्मा गोपवेषं मधुरमधुरं कृष्ण-रूपं ददर्श। यं यं भावं स स्मरति स्म तं तं तदेकचेता साक्षात् पश्यति स्म। न केवलं हिन्दूसम्प्रदायानुसारं स परमात्मनो विविधं रूपं ददर्शापि तु इस्लाम्-मसिरस्तादिधर्मैरुपदिष्टेन मार्गेणापि तयाऽकरोत्। सर्वैर्धर्मैरुपदिष्ट-परमात्मा नानावेषाकारं शैलूष इव एक एवेति च निश्चितवान्। विगलिताहंकारः तद्भावभावितात्मा च यं यं धर्मपथमङ्गीचकार तेन यथोपदिष्टं साध्यमचिरादेव प्राप। तेन तत्तद्धर्मोपासनायामङ्गीकृतायां च तस्य तस्य धर्मस्य साक्षात्कृततत्त्वं कश्चिदनाहूत एवागत्य तस्य साधनायां साह्यमकरोत्। तस्यानभिव्यक्तोऽपि संकल्पः सफलोऽभवत्। एकदा गङ्गातटे वटाध उप-विष्टस्तत्स्थलं साधनानुरूपं दृष्ट्वा तत्र कुटिरं कर्तुमैच्छद्। तदैव च कुटिर-निर्माणसामग्री स्वयं नदीजले प्रवहन्ती तमुपजगाम। एवं साधना-सहाया साधनोपकरणानि च संकल्पमात्रेण प्राप्तान्यभूवन्निति नूनं तस्यापि विस्मया-वहमासीत्।

तस्य साधनायां अयमेको विशेष आसीद्। खिस्तसाधनाकाले स आत्मनः पूर्वरूपं निःशेषं विस्मृत्याहर्निशं ख्रिस्तमेवाचिन्तयत्। विषयत्वेन बहिः साक्षात्कृते च ख्रिस्तरूपे, ख्रिस्तस्तत्स्वरूपमिव प्रविशन् विलयम-गच्छत्। सर्वास्वपि साक्षात्कृततत्त्वेष्विदमेवाद्भुतमनुभूतं तेन। निश्चितञ्च यत्सच्चिदानंदस्वरूप एक एव परमात्मा सर्वदेवरूपः स्वात्मस्वरूपश्चेति।

## शारदादेवीसहवास

एवं बहुतिथे काले व्यतीतेऽपि, साधनाविष्टस्य तस्य स्वपरिणयविस्मरण-मेवासीत्। तस्य पत्नी 'शारदादेवी' इदानीं प्राप्तयौवनाऽभवत्। सा कर्णाकर्णितया ज्ञातवती यत् तत्पतिरुन्मत्तः समजायत। पुनश्च श्रुतवती यत्स साक्षात्कृतधर्मतत्त्वो लोकैरीश्वरत्वेन पूज्यते इति। अथ सा मातुराज्ञा-मधिगत्य विगतिचोशानसहायाऽपि पद्भ्यां चलन्ती दक्षिणेश्वरं समागच्छत्। रामकृष्णस्तां प्रीत्या स्वागतीचकार, किन्त्ववोचयत् "नाहं त्वां भार्यारूपामपि

सु रूपान्तरस्या जगदबा कालीमेव पश्यामी"ति। सर्वं कालीमय अपत-श्यश्च स ता मृतो जननीमिवामायत। कदाचित् तस्या पुरो धूपदीपौ नैवेद्य च निधाय, गन्धपुष्पाणि च समर्प्य, तस्या. पूजाविधिमकरोत्। विदित पतिमाहात्म्या पतिदेवता च सा पतिसेवा पतिर्दर्शितपथेन च परमात्मसाक्षात्कारमेवायाचत। तदनुगता च तत्समीप वसन्ती भोजनादिनिर्माणैककार्या परमेश्वरोपासनपरायणा बभूव। मथुरानाथस्तस्यै दशसहस्र रूप्यकाणि दातुमैच्छत्। किन्तु कनकत्यागादेव पति परमात्मसाक्षात्कार कृतवानिति भणन्ती साऽपरिग्रहव्रतमेव साधु मेने। दैहिके सुखे न कदापि तस्या मनोऽरज्यत। सा किल पतिमेव परमात्मान विदन्ती तत्सेवामेवानन्दैकसाधन मन्वभवत्।

लौकिकरीत्याऽकृतविद्यस्यापि रामकृष्णस्य स्मरणशक्तिर्बलवत्यवर्तत। बाल्येऽय अध्यात्मरामायणस्य बगभाषानुवादमश्रौषीत्। चरमे व वयसि वर्तमानस्य मूलरूपेण ताच्छ्रोतु मतिरासीत्। तच्छ्रवणकाले स तदातदा पूर्वापर वृत्त स्मृतिगत यथावदेव प्राकाशयत्। न सुदीर्घमपि कालव्यवधान पूर्वश्रुत विस्मारयितुमशकत्। योगारूढस्य तस्यासाधारणी बभूव चमत्कार-सर्जनशक्ति। किन्तु न स कदापि साभिप्राय तामुपयुयोज। अवदच्च शिष्येभ्यो य"द्योगलब्धामलौकिकी चमत्कारशक्ति स्वार्थाय युञ्जतेः योगभ्रशो जायते। अत सर्वदा तत्प्रलोभनादात्मा रक्षयितव्य। लोक ख्याते परमार्थाधिगम एव श्रेयान्। लोकसम्मानलुब्धस्य चेतो साध्याद्-भ्रश्यति। एव सिद्धयो नून बाधिका एव मन्तव्या" इति। परन्तु रामकृष्ण-स्यानभिमतप्रकाशमपि सिद्धिसामर्थ्यं लौकै बहुश साक्षादक्रियत। स खलु समागतस्य जनस्य विचारज्ञानेन, भविष्यद्घटनावर्णनेन, दूरगताना वस्तूनां दर्शनेन, सकल्पादेवान्येषा रोगनिवर्तनेन च, लोकोत्तरशक्तिसपन्न इत्यनेकै-र्विदितोऽभवत्। कदाचित् स स्पृशन्नेव साधकस्य मन प्रवृत्ति परिवृत्तिम-गमयत्, समाधि वालम्भयद्, येन स साधको न बाह्य नाप्यान्तर किंचिद्वेद, अश्रुतपूर्वाश्च दिव्या आकृती ददर्श। केचन तादृश स्वभावपरिवर्तनमविन्दन्

येन परमार्थमार्गं विना विघ्नं प्रक्रमितुमशकन्। विषयी जन कदाचित् तत्स्पर्शपूतो निर्विषयता, लोभी च विभवविरतिमध्यगच्छत्। एवं नैका घटनास्तस्य सिद्धि प्रमाणयन्ति स्म।

## दीनदयालुता

अथ यात्रार्थं प्रस्थित सपरिवारो मथुरानाथ । रामकृष्णमपि स प्रार्थनया सह गन्तुमनुनीतवान्। उत्तराणि तीर्थस्थानानि पर्यटन् रामकृष्णो न केवल मन्दिराणि अपि तूत्तमान् परार्थप्रवृत्तान् यतीश्वरानपि साक्षादकरोत्। वाराणस्यां स तैलङ्गस्वामिन वृन्दावने च गङ्गामातर सबहुमानममिलत्। य य पुण्यपुरुष स ददर्श स सर्वोऽपि त पारदृश्वान ज्ञानिनममस्त। केचन त परमात्मावतारमकथयन्। स खलु वृन्दावनवासमतीवारोचयत। किन्तु आसन्नमरणा वृद्धा जननी द्रष्टुकाम तत तूर्णं न्यवर्तत।

रामकृष्णप्रभृतय यात्राया प्रतिनिवर्तमाना वैद्यनाथसमीपे ग्राममेकम-गच्छन्। तत्र दारिद्र्यापहृतान् जनान् दर्शदर्शं भृशमतप्यत् तच्चेत । मथुरा नाथमनुरुध्य च स तान् सप्ताह यावद् सपन्न भोजन वस्त्रादीनि चादापयत्।

स हि तदा तदा शिष्येभ्योऽब्रवीत् "अरविन्दे समुत्फुल्ले, अनाहूता अपि भ्रमरा स्वयमेव तदावृण्वन्ति" इति।

इयमुक्ति तद्विषये पूर्णमवितथाऽभवत्। विविधधर्मा सत्यदर्शना-भिलाषिण शतशो जनास्त गुरु कर्तुं अध्यात्ममार्गे प्रकाशमधिगन्तुमुपा-सर्पन्। तत्समीपस्थितिमपि त परमश्रेयस्करीममन्यन्त। ब्राह्ममुहूर्ताद् मध्यरात्रि यावत्तत्कुटिर साधकव्रातो गतागत करोति स्म। न केवल साधका एवापि तु योगविद्याया भक्तिमार्गे च विचक्षणा अपि तत्सन्निधि काङ्क्षन्ते स्म। परमहंसस्य च तस्य प्रेरणया सिद्धिविघ्नान् निवारयन्ति स्म। तस्य बाल-सहजा निर्दोषता, निरहङ्कारो व्यवहार, अकृत्रिममार्जवञ्च दृष्टमात्रमपि

चेत आवर्जयति स्म शुचिभावञ्चापादयति स्म। तस्य सरला भाषा मम ध्यात्मविद्योपनिषद्। ब्रह्मसमाजनेता बुद्धिमतां मान्य केशवसेनोऽपि स्वानुयायिना निन्दामप्यविगणय्य, तत्सामीप्येन परा शान्ति चेतःसमाधान च विन्दते स्म। स च रामकृष्णरक्त दृष्ट्वाऽन्येऽपि नवीनविद्या विचक्षणा रामकृष्ण सश्रद्धमुपसर्पन्ति स्म।

अनयो समागमोऽपि विचित्र आसीत्।

एकदा बेलगरियोद्यानस्थित केशव द्रष्टु रामकृष्ण स्वयमेवागच्छत्। तदा सवृत्तेन विचारविनिमयेन, रामकृष्णस्याध्यात्मिकमोऽशस्य विदितमभूत् केशवस्य। तदनु स नैकशो रामकृष्णदर्शनेनात्मान प्रसादयति स्म। समाहितचेताश्च ततो निवर्तते स्म। रामकृष्णसगेनास्य धर्मविपयिणी दृष्टिर्नवावतारमाससाद। लेखादिरूपेण चैतदसकृत् प्रकाशयन् केशवो नवशिक्षितेषु परमहससङ्गवृत्तिमुद्भावयामास। बहुश केचन पाश्चात्यशिक्षादीक्षितास्त दम्भिन मन्वाना परीक्षितु समागच्छन्। पर हन्त! तस्याद्भुतमार्जव परमात्मपरायणता च विभाव्य तच्छिष्यतामुपगता अभूवन्।

तादृशेष्ववर्चीनशिक्षितेष्वन्यतम आसीद् नरेन्द्रः। अतीव मेधावी असदृशकान्तिश्चाय युवा भगवन्तमुपसृत्य, ईश्वरास्तित्वे प्रमाणमयाचत। दूराद्विच्छिन्न सुत समागच्छन्त दृष्ट्वा पितेव प्रसन्नहृदय परमहसस्त स्नेहार्द्रेण दृशा स्नपयन्निव शिशुसरलया प्रीतिपूर्णया च वाचाऽवोचत्–"वत्स! पुरत स्थित त्वामिव परमात्मान साक्षात्करोमि चेदिच्छसि त्वमपि त विना विलब द्रष्टु शक्ष्यसि" इति। तस्याप्रतिमप्रभयाऽभिभूत इव, पूर्वजन्म–प्रीतितन्तु नाऽऽबद्ध इव च नरेन्द्रस्त भूयो भूय उपससार। तत्सान्निध्येऽनिर्वचनीय सुख हृदयोद्वेगोपशमञ्च लेभे। तद्विच्छेद लेशतोऽप्यसहमान स तदन्तेवासिताम् अङ्गीकृत्य तेन सहैव निरन्तर तस्थौ। अयमेव पश्चाद् विवेकानन्द इति नाम्नाऽप्रथत। सकले भूमण्डले च भगवतो रामकृष्णस्य परमहसतायाः, तदुपदिष्टस्य वेदान्तसदेशस्य च अप्रतिमप्रतिम प्रसारकोऽभवत्।

## चरमसमाधिः

अथ १९८५ ख्रिस्ताब्दारम्भ एव भगवान् रामकृष्णो गलव्याधिना दष्टोऽभवत्। अहोनिशं साधकं सभापमाणस्य तस्य वचःप्रवृत्तिं कष्टकरी पवृत्ता। 'गलकेन्सर' व्याधिश्च पदमकृत। भिषग्भिर्मौनमास्थातुं प्रार्थितोपि साधकोपकारप्रवणं स नोपदेशाद् विरराम। दुःसहेन व्याधिना पीड्यमानोऽपि न स बाह्यामान्तराञ्च पीडामनुभवन्निवालक्ष्यत। पूर्ववदेव प्रसन्नहृदयो विविधकार्येषु प्रावर्तत। यथेच्छं च तदा तदा समाधिस्थितिमलभत। १९८६ ख्रिस्ताब्दस्य अगस्त-मासस्य १६ तारिकायां, निशाया प्रहरद्वये व्यतीते, स भगवान् समाधिलीनोऽभवत्। स च तस्य चरम एव समाधिरभवत्। तदा तदा प्राप्तसमाधेरस्य श्वासनाडीनिश्चलतामनुभूतवन्त पार्श्वचरा न तदीयतं समाधिं चरमममविदन्। अत एव हन्त! तैरत्र विभ्रान्तमभूत्। देहधारिणं परमतत्त्वाच्च सम्प्राप्तं शाश्वतिकं वियोगं ते नाविदन्।

## व्यवहारोदारता

स हि भगवान् सदैव स्वशिष्यान् साधकाश्च परमात्मरूपानपश्यत्। न स्व तै गुरुपदेन सबाध्यमानमरोचयत्। कदाचित्स योगारूढानां पदरजः शिरसि धारयति स्म। कदाचिच्च स स्वमेव तेषां शिष्यं प्रकाशयति स्म। अन्यदा च आत्मानमेव सर्वेश्वरं सर्वं कर्तुमकर्तुमन्यथा वा कर्तुं समर्थं प्रख्यापयामास। अपरस्मिश्च काले स स्वमेव राम, कृष्ण, बुद्ध, वसिष्ठं वा प्रतिपादयामास। नित्यमुक्तोऽहं न जातो, न बद्ध, नास्ति किञ्चित्प्राप्तव्यमाप्तकामस्य ममेति च व्याहृत्य, लोकानां सन्मार्गप्रवर्तनमेवैकं स्वावतारप्रयोजनं प्राकाशयत्। न कोऽपि तं यथार्थतो वेत्तुं प्राभवत्। रहस्यमेव नूनं लोकोत्तराणां साक्षात्कृततत्त्वानां चरितम्। को हि तद्विज्ञातुमर्हति! परमहंसस्यास्य जीविते, नूनं पिण्डीभूय पुनः प्रकाशित इव भारतीयोऽध्यात्मविद्यादीपः सल्लक्षितः।

# परमहंससूक्तिरत्नानि

(१) नक्तं यूयमसंख्यतारकैराच्छन्नं नभः पश्यथ। परन्तु न ता तारकान् दिवा दिनमणौ प्रतपति पश्यथ। नैतेन वदथ यद्दिवा तारका भवन्ति। तथैवाज्ञानदिने प्रभवति, न यूयं परमात्मानं पश्यथ। नैतेन परमा त्मनोऽभावो वक्तुं शक्यः।

(२) कार्पासपूर्णान्युपधानानीव भवन्ति मनुष्याः। उपधानस्यावरणानि विभिन्नवर्णानि नानामूल्यानि च वर्तेरन्, किन्त्वन्तर्गतं कार्पासन्त्वेकरूपं शुभ्रं वर्णञ्च भवति। तथैव श्यामादिवर्णशालिनः अज्ञविज्ञादिभेदभिन्नान् मनुजानेकरूपान् जानीथ।

(३) परमात्मस्वरूपविशेषे तदज्ञा एव विवदन्ति। भोजनार्थमुपविष्टा जना अनागते एव भोजने किं तद्भवेदिति विवदन्ति, बहुशः कलकलं च कुर्वन्ति समागते तु तस्मिन् विरतान्यव्यापाराः तदास्वादनैकपरा भवन्ति।

(४) एकदा केशवचन्द्रस्तं पप्रच्छ—"भगवन्! आत्मज्ञानमेव परं कार्यम्। तद्विहाय देवतार्चनादिक्रियाकाण्डप्रवृत्तिः नूनं तण्डुलान् विहाय तुषसंग्रह इव भवति। कथन्नु भवान् मन्यते?" भगवान् स्मयन्नेवावोचत्- "सत्यम्, किन्तु वितुषास्तण्डुला न प्ररोहन्तीति कथं भवान् विस्मरति!" इति।

अन्यः कश्चिदेवमपृच्छत्—"भगवान्! अकृतविद्यस्य भवतः सर्वविधप्रश्नानां सद्य एव समुत्तरणे कुतो भवति सामर्थ्यम्?"

"महतो धान्यराशेर्धान्यं तोलयतस्तुलाधरस्येव मे गतिः। स खलु तुला राशिं प्रति धरन्नेव पूर्णां पश्यति, उद्धरति च, तेन तुलापूर्तये धान्यं सञ्चेतव्यं न भवति। तथैवाहं परमात्मानमभ्यासमानं विवृत्य वर्ते। मम हृदयतुला तेन ज्ञानाकरेण स्वतः पूर्यते" इति।

वृद्धे पारे स्थितं तत्त्वं साक्षात्कृतवता स्वयंसिद्धा सर्वज्ञता। तेषां वचनो पन्यासोऽपि बालबोध्यः, सत्यमिव सरलश्चेत्येतैः तद्वचांसि स्पष्टीभवति।





"जन्मसिद्धोऽधिकारो मे स्वराज्यं" निजगाद यः।
राष्ट्रसेवार्पितस्वानां 'तिलकः' तिलकायते ॥

# लोकमान्यः तिलकः

१८५७ ख्रिस्ताब्दीये स्वातन्त्र्यविप्लवे विफलतामुपगते, लक्ष्मीबाई-नाना-तात्या-बहादुरशाह-प्रभृतिषु परलोक कारागार वा प्रापितेषु, आङ्ग्ल-शासन प्ररूढमूलमजायत भारते वर्षे। आङ्ग्लाना शौर्येण, बुद्धिविभवेन शासनपाटवेन च भीतभीता प्रीतप्रीताश्चाभूवन् भारतीया। "नूनमाङ्ग्ल-शासनमीश्वरप्रसादरूपम्। अज-व्याघ्रावप्यत्र निराबाध सवसत'– इत्यपि नैके भणन्ति स्म। अराजकता मात्स्यन्याय च निवर्त्य तैः सुरक्षासपन्न शासन प्रस्थापितमिति दर्शंदर्श निर्वृति लेभिरे सुरक्षाप्रिया भारतीया। मधुच्छल-

विषकुम्भसमाश्च शासका जनताया आत्मरक्षासामर्थ्यं, उद्योगस्वायत्ततां आत्मगौरवञ्च शनैः शनैर्नाशयन्तस्तस्या सम्पदमोजश्च जलुकावत् चूषन्ति स्म। लोकानामज्ञानभूयिष्ठा सामाजिकी धार्मिकीञ्च जीवनपद्धतिं समर्थं तेषु स्वातन्त्र्यभ्रान्तिं जनयन्त, स्वोदार्यविश्वासं प्रावर्तयन्त स्वार्थपरा शासका। मदिरामत्त इव घूर्णायमाण, प्रविष्टपिशाच इव च विवेकशून्यो ऽभवद् भारतीयो जनगण।

तादृशे मोहग्रस्ते काले प्रादुरभूद् विद्यावतां कर्मयोगिनां राष्ट्रभक्तानाञ्च वरेण्यो बालाख्यो गंगाधरसुतो वीरप्रसविनि महाराष्ट्रप्रदेशे। अयमेव पश्चात् लोकवत्सल पुरुषपुगवो राष्ट्रनेता 'लोकमान्य' इति गुणज्ञैरर्पित चरितार्थं मुपाधिं लेभे।

महाराष्ट्रप्रदेशे रत्नागिरिमण्डले **चिखलगाँव** नामा ग्रामो वर्तते। तत्र तिलकप्रपितामह **केशवरावः** प्रासूत। स खलु शस्त्रे शास्त्रे च कृतदीक्षो बुद्धिमतां वर इति ख्यातिमगमत्। केशवरावस्य सुतो **रामचंद्रः**। रामचन्द्र सुतश्च **गंगाधरः** गंगाधर इव तपस्वी शिक्षावितरणे च परमदक्षोऽभवत्। संस्कृते गणिते च विशिष्टविद्वान् रामचन्द्र **पार्वतीबाईनाम्नी** पतिपरायणा मोजस्विनी नारीमुपयेमे। परस्परप्रीतिमतोस्तयो कन्यात्रयमुदभवत्। सुतकाङ्क्षिणी पार्वती अविरतनयेव व्रतोपवासादि चरन्ती तन्वीमपि तनु कृशयन्ती प्रतिदिनं परमेश्वरं गुणिनं तनयं ययाचे। व्रतादि-प्रभावाद्वा, परमेशानुग्रहाद्वा, विलबपाकिनो पूर्वपुण्याद्वा सतीप्रतीमा पार्वती (१८५६ खिस्ताब्दे जुलाई मासस्य २३ तिथौ) १७७८ शकाब्दस्याषाढकृष्णषष्ठ्यां षडाननकल्प सुतरत्नं सुषुवे। अयमेवास्माकं चरित्रनायको बालाख्यो लोकमान्यस्तिलक।

जन्मसमये शिशुरयमतीव शिथिलावयव आसीत्। तस्य हस्तपाद निर्जीवमिवाभवत्। शीर्षं च मासपिण्डायमानं शिथिलं, नेत्रे च निमीलिते आस्ताम्। चिरं घृतमर्दनेनास्य शिरः काठिन्यं लेभे। बालस्यास्य कुलागतं 'केशवे'ति नामाग्रियत। प्रथमपुत्रो न नाम्नाऽऽह्वाहनीय इति रूढिवशाच्च 'बाल' इति व्यवहारनामाग्रियत।

जन्म जन्मैव भारत भाविन उत्थानस्य सूचकमिवाभूत्। समनन्तरवर्ष एव १८५७ ख्रिस्ताब्दे आङ्ग्लशासनमुन्मूलयितु कैश्चिद् भारतीयै राजभी राष्ट्रभक्तैश्च विप्लव कृत । समग्रोऽपि भारतवर्षो युद्धपटहनादैश्चकम्पे। युद्धे पेशवादीनामाङ्ग्लै पराजये कृते, बालस्य पितामहो 'रामचन्द्र' निराश्रयत्वाद्वा, नैराश्याद्वा, निर्वेदाद्वा, प्रव्रज्या जिघृक्षु काशी प्रतस्थे। शिशोर्बालस्य बाल्यकाल काशीत प्रतिनिवृत्तस्य पितामहस्य सान्निध्ये व्यतीयाय। विचक्षणो बाल शैशव एव पितामहात् शब्द-धातुरूपावलि, समासचक्रम्, अमरकोश, प्राथमिकगणितञ्च साधु स्वायत्तीचकार। यज्ञोपवीतकाले चाष्टवर्षदेशीयस्य तस्य सस्कृपाटव पश्यन्नुपाध्याय साश्चर्य मुमुदे।

पिता गगाधरो नियमनिष्ठो धर्मकर्मसु च परमश्रद्धावानभूत्। अत तच्छासितो बालोऽपि सध्यावदनादिकर्माणि श्रद्धया नियमेन चान्वतिष्ठत्। इय नियमनिष्ठा धर्मप्रीतिश्च तमाजीवनमनुशास्ति स्म।

## गृहीतो बाल

स्वभाषाज्ञानम् इदप्रथमतया ग्राह्यमिति निष्ठावान् गगाधरो बालस्य शिक्षारभ मराठीशालायामेव साधु मेने। येन चतुर्थकक्षा यावत् मराठीशालायामधीत्य बाल आङ्ग्लभाषाशाला प्रविवेश। अध्ययनपटुरय प्रतिदिन शालेय पितृप्राप्तञ्च स्वाध्याय यथावदकरोत्। येनाय महाविद्वान् भवितेति सर्वे सबधिनोऽभिप्रयन्ति स्म। आङ्ग्लशालायामेकदा कश्चित् सतीर्थ्यो भूबीज--(मुगफली) त्वचोऽवाकिरत्। शिक्षकस्तद्दृष्ट्वा तिलकादिभ्य सर्वेभ्य तास्त्वच सम्मार्ष्टुमादिशत्। दृढमतिस्तिलको 'न मया भूबीजानि भुक्तान्यतो नाह तत्त्वचो मार्जयिष्यामी'ति समभाषत। तथाकर्तु निर्बन्धे त्रियमाणे स पुस्तकानि सञ्चित्य गृहगमनमेव वर मेने। निरपराध स न तूष्णी दण्डस्वीकार युक्तरूपममन्यत। एकदा पुन सस्कृतशिक्षक सानुवाद नैषधीयचरित क्रेतु छात्रानादिशत्। विनैवानुवादमह काव्यमिदमवगच्छामीत्युक्त्वा बालस्तत्क्रयण नाङ्गीचकार। तद्योग्यता जानानोऽप्यध्यापक आज्ञाभङ्गो मा भूदिति

तत्क्षयणाय निर्बन्धः । निर्देशमननुसरन्तं च बालं मुख्याचार्यं कठोरशासं 'जेकोब' प्रति दण्डार्थमनयत् । 'पुस्तकं क्रियतां शाला वा त्यज्यताम्' इति तेनादिष्टो बालोऽन्याय्यशासनाङ्गीकारात् शालात्यागमेव श्रेयोऽमन्यत।

गगाधरः सुतस्याध्ययनप्रवृत्तिं तदातदा पर्यालोचयति स्म । एकदा स बालरचितान् कांश्चित् संस्कृतश्लोकान् दृष्ट्वा सानन्दं विस्मयमवाप। तत्रासीदयमन्यतमः श्लोकः –

> सदागुणज्ञः सुपरीक्षणाय यः
> कवीन्द्रकाव्यामृतकाञ्चनस्य वै ।
> करोति लोके निकषः नु दुर्जनः
> खलाय तस्माद्धिताय मे नमः ॥

माध्यमिकशालायामध्ययनरतस्य पञ्चदशहायनस्यैव बालस्य 'तापीबाई' नाम्न्या बालया सह विवाहः संवृत्तः । तापीबाई धर्मधनस्य विद्या विभूषितस्य सदाचारसम्पन्नस्य च पितुः कन्यासीद् । बाल्य एव मातृहीनेयं नववधूः मातृशून्यस्य तिलककुटुम्बस्य कुटुम्बभारं धृतवती । पतिगृहे च सा 'सत्यभामे' ति सञ्ज्ञया सबोधिताऽभवत् । तिलकोऽपि विवाहात्परं 'बलवन्त राव' इत्याख्यां लेभे । नववयसौ तौ दंपती रुदन्तौ विहाय हन्त ! बालपिता गगाधरोऽपि पितृलोकं प्रातिष्ठत । बालस्तदा माध्यमिकशालान्तपरीक्षार्थं मधीयान आसीत् । पितृनिधनाद् व्यग्रमना अपि स उत्तमेष्वन्यतमत्वेन परीक्षां पारयामास । गणिते तु कठिनानेव प्रश्नान् सार्धैकघण्टाया समाधाय परीक्षा गृहान्निरगच्छत् ।

तदनु 'डेक्कनकॉलेज' इत्यत्रोच्चशिक्षार्थं गतः । पितुर्मनोरथानुसारं धर्ममनुतिष्ठासुः स शालाच्छात्रालये निवासं नारोचयत् । विप्रसम्मतस्याचारपालनस्य सौकर्यानुरूपञ्च स्थानान्तर्गतं भोजनालयं प्रविष्टः । उच्चशिक्षाकाले तिलकः स्वस्य देहदौर्बल्यं निनिन्द । तत्परित्यागाय च कठोरं व्यायाममसेवत । व्यायामान्तरं नियमेनानुतिष्ठन्नपि स जलसंतरणेऽधिको

शालानिर्माणायावश्यकेषूपकरणेषु-अमन्दोत्साह , नि स्वार्थं राष्ट्र-समाज सेवोत्कण्ठा, विद्यावैचक्षण्यम्, अविलासि सरल स्वच्छ च शीलम्, अध्यापन पटुता, भारतीयभाषाणा विकासार्थं निष्ठा, तासामभिव्यक्तिसामर्थ्यस्य संवर्धने प्रकाशने च समादर, भारतीयसंस्कारेषु अध्यात्मदृष्टौ च गौरवम तत्प्रकाशनाय च द्रढीयसी उत्कठा, आत्मसामर्थ्यविश्वासश्चेत्येत एवासन्। हि एकस्या शालाया अनुभवेन स्वसामर्थ्यं परीक्ष्य, लोकेषु राष्ट्रियशिक्षा प्रति गौरवबुद्धिञ्च समुत्पाद्य, शालासंतति ततश्च महाशाला अपि समुद्भावयि कृतमतयोऽभवन्। प्रथमशालाया आरम्भात् पूर्वं तदुद्देश त एव प्राकाशयन् - "आङ्ग्लानामागमनात्पूर्वं राष्ट्रेऽत्र लक्ष्मी , सरस्वती, अन्नपूर्णा, वीरश्रीश्च विपुल विलसन्ति स्म। अद्य पुन ता विद्राव्य राष्ट्रमिद मरुस्थलीकृतमास्ते नवनवाना विद्याकलानामुद्भवस्तु दूरे, किन्तु सहस्रवर्षेभ्योऽत्र प्रचलन्तीन तासा शासनेन विद्रावणमेव कृत दृश्यते। निराश्रयाणा तासा पुनर्जन्मैवा स्माक ध्येयम्। आङ्ग्लाना कूटनीत्या वय दासभावमुपगता । तेषा नियम निगडिता वय ख्रिस्तधर्मगुरुभि स्वमानशून्या शिक्षा दीयामहे। स्वीयवाणि ज्योद्योगेभ्यश्च विमुखा वय परवशताया पराकाष्ठा गता । एतत सर्वमन्य यितु राष्ट्रगौरवञ्च समेधितु यथाशक्ति प्रयतिष्यामहे राष्ट्रियशिक्षामुखेन' - इति।

यथाकथञ्चिच्छालानिर्माणाय धन सञ्चित्य, सामान्य गृह च सपाद्य शालोपक्रम कृत । नामजोशी, भागवत, करन्दीकर, उपासनी-इत्येतेऽपि शिक्षासाहाय्य सन्नद्धा अभूवन्। शालाया उपक्रमस्य पूर्वरात्रावेव तिलक नामजोशिभ्या स्वहस्तै गृहभित्तिलिम्पन सम्पन्नमक्रियत ।

अन्यशालाचालकैर्द्वेषेण निन्दिताया अपि शालाया अस्या शुक्लपक्ष शशिन इव वेगेन वृद्धिरभवत्। अध्यापकानामुत्साह पाठनपाटवञ्च, स्वल्पेनैव कालेन छात्रसख्या ३३६ अकरोत्। गुणपक्षपातिनो भारतीया वैदेशिकाश्च शिक्षाशास्त्रिणस्ता राष्ट्रियशाला प्राशसन्नभ्यनन्दश्च। शालायाश्चास्या बहुमुखी वृद्धि पश्यत शिक्षकाश्छात्राश्चैना प्रवेष्टुमहमहमिकया परापतन्।

## महाशालाप्रारंभ

राष्ट्रियशालाया सर्वतोमुखीमुन्नतिं दृष्ट्वा प्रोत्साहिता तिलकादयो महाशाला प्रारब्धु मनश्चक्रिरे। तदानीतनो महामना मुबईराज्यपाल **फर्ग्युशनः** महाशालारम्भस्याभ्युपगमं प्रशस्य तदर्थं भूमिमपि विनाशुल्कमदात्। तद्गुणगृहीताश्चालका तन्महाशाला तन्नाम्ना **'फर्ग्युशन कॉलेज'** इत्यकार्षु, अस्या महाशालाया नैके अध्यापका, कृतविद्या विद्वांसश्छात्राश्च सर्वत्र देशे लब्धकीर्तयो राष्ट्रसेवापरायणाश्चाभूवन्, वर्तन्ते चेदानीमपि। येन एतज्जनकाना कीदृशी त्यागशीला निष्ठा, अध्यापनविदग्धता, कार्यपटुता चेति निश्चितं भवति।

## केसरी मराठा च वृत्तपत्रे

आङ्ग्लशालाया सिद्धिं विलोक्य, स्वात्मनि प्राप्तप्रत्यया तच्चालका एकमाङ्ग्लभाषामयमपरञ्च मराठीभाषामय वृत्तपत्र प्रवर्तनीयमिति निरणयन्। वृत्तपत्रं जनताया विचारशोधनाय, तस्या राष्ट्रियभावनामधुरणाय चोत्तममुपकरणमित्यासीदभ्युपगम प्रज्ञावता तेषाम्। तदनुसृत्य, आगरकरसपादित मराठीमाय 'केसरी' पत्र, लोकमान्यसपादित 'मराठा' इत्याङ्ग्लपत्रञ्च प्रकाशमवाप। मराठीभाषीयें 'केसरी' पत्रे उद्देश्यरूपेणान्योक्तिसमन्वितेयं जगन्नाथरचना उभयत सिंहचित्राभ्या सपुटीकृता प्रकाशिताऽभवत् —

**स्थितिं नो रे दध्याः क्षणमपि मदांधेक्षण सखे!**<br>
**गजश्रेणीनाथ! त्वमिह जटिलायां वनभुवि।**<br>
**असौ कुंभीभ्रान्त्या खरनखरविद्रावितमहा—**<br>
**गुरुग्रावग्रामः स्वपिति गिरिगर्भे हरिपति ॥**

उद्देश्यश्लोकस्यास्य शवयनाद् नरकेसरिणं तिलकम्य विदेशराज्यमर्यादा मनिमना स्पष्ट प्रकाशता। राष्ट्रभावनाया समुद्भूतया सह

स्वदेशभाषा-संस्कृतीना परिचायन विवासश्चेत्यप्यासीत् प्रयोजन चालकानाम्। 'केसरी' पत्रारभ १८८१ ग्रिस्ताब्दे प्रथमभौमवासरे समभवत। पत्रचालकाना कार्यालये कन्यंकाऽमीद्या दिवा लेखनाधारत्वेन रात्रौ च शय्याभावेन प्रायुङ्क्त धीरधीपणस्तिलक । सार्थकीकृत च तेन–'क्रियासिद्धि सत्वे भवति महता नोपकरणे।" इति भणितिरत्नम्। मराठापत्रमपि सममेव प्राकाश्यत। सपादकयोर्नाम्नो पत्रसवध आवश्यकतामनुरुध्यैव निर्दिष्ट। उभयलेखविषये तु सपादकयोर्विष्णुशास्त्रिणश्च समान एवाभूदन्वय । आभ्या पत्राभ्या सर्वत्र देशे विशिष्य च महाराष्ट्रे नवीनैव राष्ट्रिया स्फूर्तिरुद्दीपिता।

शिक्षा-सपादनकर्मरतयोस्तिलक-आगरकरयो कोल्हापुरराज्ये दनक सबधिनि कलहेऽनपेक्षित एव वृत्तपत्रसपादकत्वात् सवधो घटित। कुटिल राजनीतिप्रयोगेण च तौ मासचतुष्टयात्मक कारागारवास लम्भितौ।

राष्ट्रियशालामहाशालयोर्वृत्तपत्रयोश्च सचालनमधिकृत्य विवाद प्रावर्तत तच्चालकेषु। तेजोद्वेषिण काश्चन मिथ्याप्रलापै स्व दूषयितु प्रवृत्तान् निभाल्य तिलक स्वरक्तसवर्धितेभ्योपि विद्यालयेभ्यो निवृत्तोऽभवत्। अत्र कलहबीज सचालकाना वेतनग्रहण कार्यान्तरप्रवृत्तिश्चासीत्। तिलको ऽभणद् 'जीविकापर्याप्तमेव वेतनमस्माभिर्ग्राह्यम्। न चैतद्भिन्ने कर्मणि स्वात्मा योजनीय । इदमेव न उद्देश्यमासीत प्रारभे। न चास्य परिवृत्ति युक्तरूपा पश्यामि।' लाभान्विते कार्यान्तरे प्रवृत्तिनिषेधो मा भूदिति चासीद् गोपालकृष्ण गोखलेप्रभृतीना बहुसख्याना मतम्। सस्थाया हानि मास्तु इति विभाव्य, तिलक उद्देशत्यागात्पदत्यागमेव वर मेने।

## राजकीय-सामाजिक-कार्य-प्राथम्यविचार

रानडेमहाशयप्रभृतय "समाजे प्रविष्टानि दूषणानि पूर्व निरसनीयानि। येन स्वस्थ समाजा राजकीयस्थितिमपि साधु घटयेद्" इत्यमन्यन्त। तदर्थं ते शासनद्वारा समाजशोधायायुक्तान् नियमान् घटयितुमुत्साहिन आसन्।

तिलकाय तु नैतदरोचत। सो ह्यमन्यत – "समाजशोधो न्वस्माकमान्तरिकी समस्या। तदर्थं शिक्षादिभिर्जनमनः परिष्करणीयम्। येन ते स्वयमेव स्वस्था हितकारिणीञ्च समाजस्थितिं सम्पादयेयु। वैदेशिके शासने प्रभवति, न तावद्दुर्विना शिक्षा दातुं शक्नुम। शासनमज्ञाना कुरूढीरेव प्रोत्साहयति। विघ्नाश्चोत्पादयति न शुभविचारप्रवर्तनाव्यापारे। अतो लोकेषु शिक्षाद्वारा नवा राष्ट्रियभावनैव पूर्वं समुद्बोधनीया" इति। तदा तदा हिंदूधर्मं विनिन्द्य तद्‌गा लाकास्था शिथिलयितुं प्रवृत्तै सुधारकब्रुवैः सह वाग्युद्धमप्यक्रियत प्रज्ञाघनेन तिलकेन। शासनस्य विरोधाद् भीतिमन्तो पण्डितब्रुवा व्यर्थमेव धर्मविषयिणी लोकश्रद्धा व्याकुलयन्ति शासनं च तत्र हस्तक्षेपाय निमन्त्रयन्तीत्यभ्युपगम्य तिलको भाषणैर्लेखैश्च तान्प्रतिचकार।

## हिंदुमुस्लीमकलह

आङ्ग्ला "हिन्दु-मुस्लिमा मिथः कलहायमाना स्युश्चेन्नो राज्यं निष्कण्टकं स्या"दित्यभ्युपगमेन मुस्लिमेषु हिन्दुद्वेषं येनकेनापि निमित्तेनोद्भावयन्ति स्म। तैः प्रचोदिता मुस्लिमा तेषां प्रार्थनागृहस्य पुरतो निर्गच्छन्तीषु हिन्दुयात्रासु, पटहादिनाद निमित्तीकृत्य, सशस्त्रा लगुडहस्ताश्च हिन्दूनाक्रम्याताडयन्। केचन तु पशुमारं मारिताः। शासकास्तु प्रतिकारपरायणेषु हिन्दुषु दोषमुद्भाव्य, त एव कलहकारिण इति चाधिक्षिप्य, तान् कारागारातिथीन् कारयामासुर्मिथ्याभियोगैश्च पीडयामासु। लोकमान्य आङ्ग्लाना कूटनीतिमूलं मुस्लिमपक्षपातं तदा तदा प्राकाशयत्। हिंदुषु मुस्लिमैः क्रियमाणान्याक्रमणानि चासदिग्धं निनिन्द। स हि "उभयधर्मावलम्बिभि परस्परप्रद्वेषं विहाय सौहार्देन वर्तितव्यम्, कुटिलमतिनश्च शासनस्य प्रतिकारपरायणैर्भाव्यमि"ति बहुश उपदिदेश।

## राष्ट्रियमहासभाप्रवेश

तिलक पूर्वं पूनानगरपालिका तत्रत्य प्रादेशिकी राष्ट्रियमहासभाशाखामाश्रित्य लोकसेवाप्रवृत्त आसीत्। तस्य लोकप्रियता तथात्मीयया नैकवि-

भवयदि्भ शासनेन च कृतेऽपि विपरीताचारे, न प्रादेशिकसभादि निर्वाचिता ऽभवत्सार्वाधिकमतं । महासभा वस्तुतो राष्ट्रियचेतनाया प्रतिनिधिर्भवतु, न हि केवल लोकदु खानि प्रख्याप्य तन्निरसनाय शासनस्य प्रार्थनापरा वर्तता मिति दास्यासहिष्णोस्तिलकस्य व्याख्यानै, लेखैश्च नैकशो निर्दिष्टम्। राष्ट्रियमहासभाया संस्थापक उदारमना आद्यन 'सर ह्यूम' अपि भारतीय जनतया स्वायत्ततापोषणे प्रयतितव्यमिति मत प्राकाशयत। किन्तु एतेन शासन सामर्थ सत् प्रजापीडनपर भवेदिति भीता रानडेप्रभृतयो न नितरम्या इमा प्रवृत्तिमनुरूपाममन्यन्त। विषयेऽत्र शांतिमनसस्तिलकस्य मृदुमार्गे फिरोजशाहगोखलेप्रभृतिभिश्च सह महद्वैमत्यमवर्तत। अत पूनानगरे तिकलप्रमुखै प्रांतिकपरिषद शाखान्तरमपि प्रावर्त्यत कञ्चन कालम्।

## गणपति–शिवाजी–उत्सवः

यावत् प्रजाना राष्ट्रभक्तिर्न प्रचीयते, यावच्च राष्ट्रभक्ति परिगणितै र्नवशिक्षा दीक्षितैरेव मिथ प्रचार्यते, न तावद् भारतीय आत्मा साकल्येन जागरितो भवे'दित्यासीद् लोकमान्यस्य विचारपूत मतम्। जनताजागृतये 'केसरी' पत्र बहु कृतवत् किन्तु तेन शिक्षिताना मनोवुद्ध्योरेव सस्कार शक्य। कश्चित् कर्मकलाप पुरस्कर्तव्यो यमनुजीव्य सामान्योऽपि जनो राष्ट्रियभक्ति प्रकटीकुर्यात्। राष्ट्रसेवायज्ञश्च सतत सर्वत्र प्रधुक्षितस्तिष्ठेद्'। अनेना भ्युपगमेन लोकमान्य पूर्व लघुरूपेण प्रवर्तमान गणेशोत्सव व्यापकतामनैषीत्। राष्ट्रस्वातन्त्र्यस्य विग्रहरूपिणो **शिववीरस्य** च **जन्मजयन्त्युत्सव** तस्य राज धान्या रायगढदुर्गे महतोत्साहेन प्रायोजयत्। शिववीरस्य दुर्गप्रासादो जीर्णता गत कथञ्चिदेव पिपतिष्णुरतिष्ठत्। तस्योद्धरणाय वित्तसचयाय जनता प्रार्थिताऽभवत्। एतत्कर्मणे कोल्हापुरराज पूर्व पर्याप्त वित्त वितरितु प्रतिजज्ञे, किन्तु पश्चात् आङ्गलभयाद्वा कारणान्तराद्वा प्रतिज्ञा ता न कर्मान्विता चकार। अथापि तिलकस्योजस्विभिर्व्याख्यानैर्लेखैश्चावर्जितचेतसो जना स्तदर्थ पर्याप्त धन समचिन्वन्। सामान्यजनतैव किल तिलकस्य बलमभवत्।

तिलको धनज्ञानशून्यानामपि पूर्वजेषु धर्मे च श्रद्धावता, नवशिक्षया पाश्चात्यवासनावासितैश्च सनासिकासकोच दृश्यमानाना, भावनाधनाना, जनसाधारणानामाराध्यदेवोऽभवत्। अत एव स 'निरक्षराग्रणी'रित्यपि माक्षिमकोच नवीनैर्व्यपदिश्यते स्म।

## दुर्भिक्षपीडितानां साहाय्यम्

एकोनविंशतितमे ख्रिस्ताब्देऽसकृदापतितैर्दुर्भिक्षैभृश पीडिताऽभवद् भारतीया जना। महाराष्ट्रेऽन्यत्र च १९७६-७७ विक्रमवर्षे भीषणा दुष्काल-यातनाऽन्वभूयत। अनावृष्टेरुप्तानि बीजानि प्ररोहमात्राण्येव विपन्नानि। तिलकमुख्या नेतार पूनागताया सार्वजनिकसभाया 'केसरी' पत्रस्य च माध्यमेन शासन लोकपीडा परिहर्तुमुपादिशन्। "जनतासाह्य शासनस्या-परिहार्यो धर्म । स च जनतया निर्भीकया तस्मै हठात् प्रबोधनीय एव। न वै बुभुक्षाक्रुशेभ्य. कृपकेभ्यो भूकरो ग्राह्य । ये च सपन्ना नागरिका ग्रामीणाश्च ते सर्वात्मना नि स्वानुपकुर्यु "। इत्यादि ग्रामाद्ग्राम नगरान्नगर सञ्चर-न्तस्ते प्रतिपादयामासु । एतेषामविरतेनेदृशेनोद्यमेन, जनताविप्लवाद्भीत शासन कर्याञ्चत् कर्तव्यपरायण बभूव। सघशक्तेर्नवोत्थानमनुभवन्तश्च जना दीनाना बन्धुजनानामुपकारतत्परा बभूवु । एतत्सर्व राज्याधिकारिणा बलवतोऽवरोधान् सावष्टम प्रतिकृत्यैव सपादित तिलकादिभी राष्ट्रवीरै ।

## स्वदेशवस्तुप्रचार

"वय सर्वथा परायत्ता वर्तामहे। आङ्गला अस्माकमुद्योगान् वाणिज्यञ्च विलोप्य, स्वदेशोद्योगाना वाणिज्यस्य चाभिवृद्धिपरा वर्तन्ते। वयमपि विदेशवस्तुव्यामोहान्न स्वीयमनिष्ट पश्याम । प्रच्युतोद्योगाना स्वबान्धवाना दीनता दुरवस्थाञ्चोपेक्ष्य न वय स्वीय श्रेय साधयितु शक्ष्याम । न चैत्य देशस्वातन्त्र्य स्वप्नेऽपि लप्स्यते" इत्येतादृशेन तिलकादिप्रेरितेन स्वदेशवस्त्वा-ग्रहेण 'माचेस्टर' वस्त्रोद्योगो विपन्नोऽभवत्। भारतीयो वस्त्रोद्योगश्च हि

पुष्टिमवाप। गृहोद्योगा अपि शनैः शनैः प्राप्तपदा अभूवन्। इय स्वदेशवस्तुसम्माननाऽग्रे महात्मना गान्धिना विपुलं प्रसारमवापिता, राष्ट्रस्वातन्त्र्य प्रवृत्तेश्चानिवार्याऽङ्गता नीतिरयेतद्धि लोकमान्यस्य पुरोदर्शितं प्रकाशयते।

## महारोगविपत्तिः

मुंबापुरी पुनानगरं च प्लेगाख्येन महारोगेणोपद्रुते अभवताम्। रोगिणामरोगैः सयोगं परिहर्तुं स्थानीयाधिकारिभिः सैनिका आदिष्टाः। रोगिणां गवेषणानिमित्तं ते निर्मर्यादं गृहाणि प्रविश्य हठाद् रोगस्पृष्टानाकृष्य रुग्णालयानाचकर्षुः, तत्र सहृदयताहीनैर्भिषग्भिरतिकठोरं व्यवह्रियते स्म रोगक्लिष्टैः सह। तथा च सद्यः स्थापिता रुग्णालया पशुगोष्ठतुल्या अभूवन्। अतस्तत्र गमनाद् गृह एव स्थिता लोका यमसदनप्राप्तिं वरममन्यन्त। सैनिकेषु नैके वैदेशिका अवर्तन्त ये हिन्दुगृहाणां मर्यादां नाविदन्। अतो महानसमपि ते निःसकोचं प्राविशन्। स्त्रीभिश्चानुचितं व्यवाहरन्। केचन तु पापाः स्त्रीणां शीलमप्यलुम्पन्। एतेन जना महारोगापेक्षया पि सैनिकान् महत्तरां विपदं विभावयन्तस्तद्दर्शनमात्रेण चकम्पिरे। एतत्सर्वं दर्शंदर्शं लोकमान्यो भृशमतप्यत। स हि प्रथमं जनतामेवमबोधयत् —'ख्रिस्तललना निर्भयं सञ्चरन्त्योऽन्यान् परिचरन्ति। वयन्तु बन्धुपरिचर्यामपि क्लेशाय कलयन्तस्तान् क्रूरेभ्यः सैनिकेभ्योऽर्पयाम। सैनिका यदस्मद्दारानामन्ति भीतभीता वयमात्मत्राणव्यग्राः पलायामः। किं नाम भवेद् हीनतरमतः परम्? किमिति क्लीबा इव वर्तमाना न लज्जन्ते भारतीयाः? 'यदि कोऽपि सैनिकोऽस्मन्महिलां परामृशति प्राणानपि तृणीकृत्य स प्रतिकर्तव्यः। तादृशे समये शिवाजीसततिः सिंहोऽसत्त्वा गर्जतु। स्वमानरक्षायत्ते हुताः प्राणा नूनं स्वर्गाय कल्पन्ते"। इत्यादि। केचन रोगभीताः स्वजनान् विपद्यमानानपि परित्यज्य पलायनपरा बभूवुः। तानपि भृशं निनिन्द तिलकः। स हि धैर्यधनो बहुशः स्वीयैरुपदिष्टोऽपि नान्यत्रगमनविचारमप्यसहत। तस्य ज्येष्ठसुतोऽनेकरोगिभिः सह स्वर्गं जगाम। तदा सुहृदामाश्वासनवाणीं श्रुत्वा धैर्यमूर्तिः स

अविचल बभाण –"हुताशनीवह्नौ सर्वेणापि किञ्चिद् गोमयादिक होतव्य-भवति। तद्वदेव सार्वजनिकेऽस्मिन् सकटवह्नौ ममापि तनयो हव्यता प्राप्त इत्यत्र का खलु दुखवार्ता ?" इति।

शासनोपद्रवसत्रस्त कश्चित्, भुशुण्डिगुटिकया क्रूरकर्मणो 'रॅड' नाम्न आङ्ग्लस्य प्राणान् जहार। एतेन पादाहतसर्प इव रुष्ट शासनाधियो बाहुल्येन सैनिकानामनीकानि पुनापुर प्रेषयित निश्चिकाय। विदेशसैनिकाना क्रूरकर्मैव लोकयातनाबीजमित्युत्प्रेक्ष्य लोकमान्योऽलिखत् – "शासनस्य शिरो भूतग्रस्तमेव प्रतिभाति। कस्यापि वधोऽनुचित एव। रेडवधकारिण धातुक गृहीत्वा वधस्तम्भ नयन्तु। किन्तु सर्वानर्थबीजाना सैनिकाना सख्यावृद्धि न कस्यापि कल्याणाय भविष्यति। शासन किल दृष्टिव्यत्यास विहाय युक्तस्यानुपायान् कर्तुमर्हति ॥" एवमादि।

## प्रथम-राजद्रोहाभियोग·

तिरक्स्योद्धर्वैर्व्याख्यानै, प्रजासु राष्ट्राभिमानमधुक्षकैर्लेखैश्च वृश्चिकदशवेदनामध्यगच्छच्छासनम्। तद्धि लोकतिलकस्य तिलकस्य लोकेभ्योऽपसारणायोपायानचिन्तयत्। प्रजापीडनेन प्रज्ज्वलितामर्षस्तिलको विधिभङ्गानिवारणव्यग्रोऽपि अत्युद्दीप्ता भाषामुपायुङ्क्त केसरीपत्रे। केसरीपत्रस्य १४ जून १८९७ दिने प्रकाशित लेखमाश्रित्य सपादकस्य तिलकस्य (तपु दिनेषु तिलक एव केसरीसपादक आसीत्) मुद्रकस्य बाळस्य च कारागारनिक्षेपोऽक्रियत। प्रतिभूधनेन बधनिवृत्तौ प्रार्थितायामपि न शासन तदन्वमन्यत। निरक्वाक्कितो 'दावर' भूरि प्रयत्य लक्षात्मकरूप्यकन्यासप्रतिज्ञया च कथञ्चित् सप्ताहानन्तरमेव तात्कालिकी मुक्ति कारयामास। अभियोगनिर्णयश्च ८ सप्टेम्बरे निश्चिताऽभवत्। एतदन्वयेन महदृणमक्रियत लोकमान्येन। विधि-अध्यापनेन स कथञ्चित् परिवारस्य पोषणपर्याप्तमेव द्रव्यमलभत। कथम् बहुव्ययसाध्याभियोगप्रतिकारो विधातव्य इति चिन्ता सन्तानापद्रुता अभवन् तिलकादय। राष्ट्रसेवानिरतस्य तस्य दु खमात्मनीन

मन्याना महाराष्ट्रजनता, रवीन्द्रनाथादयो वगसुहृदश्च प्रभूत धन सचिन्य व्यतरन्। एव तिलकरक्षा समग्रराष्ट्रस्यैव धर्तव्यमिति जनै सपरिकरबद्ध निरचायि। सुदीर्घेऽभियोगकर्मणि प्रवृत्ते, अभियोगालय सहस्रशो जना आवृणवन्। अत्र कर्मणि नैके वाकिला महाराष्ट्रकेसरिणस्तिलकस्य मुक्त्यै सर्वात्मना प्रायतन्त। लोकनिर्णायका (ज्युरी) सर्वसमत्या तिलक निर्दोष मख्यापयन्। किन्तु न्यायाधिकारी 'स्ट्रेची' तिलक विधिभङ्गकर प्रख्याप्य सार्धैकवर्षस्य सश्रम कारावास दण्डमघोषयत्। निर्णयमिम प्रतिकर्तु तिलकपक्षीया खरे–दादाप्रभृतय इग्लेडस्य सर्वोच्चन्यायालयमुपगम्य। किन्तु हन्त ! तै कृतेऽपि भूरि श्रमे, व्ययितेऽपि प्रभूते धने, दडस्थितिर्न निवारितु शक्ताभूत्। तिलकप्रभृतयश्च यातनापूर्ण कारावास प्रापिता। एतदनुबन्धेन वगकेसरी सुरेन्द्रनाथ अगर्जत् – पूनानगर सैनिकशिविरता नीतमिति शासनस्य महान् प्रमाद। राष्ट्रनायक लोकमान्य कारागारस्थित जानता मे हृदय पीडोत्पीडेन प्रस्फुटतीव। समग्र हि राष्ट्र तत्समवेदनयाऽश्रूणि विमुञ्चति'। इति।

लोकमान्यादीना दण्डवार्ता श्रुत्वा न्यायालय परित स्थितो जनसम्मर्दो **'जयतु जयतु लोकमान्य'** इति गगनविदारिण घोषमतनोत्।

कारागारस्य प्रतिकूल जीवन तिलकस्य स्वास्थ्यममृद्नात्। एतेन भृश सन्त्रस्ता प्रजा त मोचयितु शासनमजस्र प्रार्थयामासु। तिलकदर्शनलालसा लोकश्रेष्ठा अपि काराधिकारिभिरुद्धतमवमन्यन्ते स्म। खरेप्रभृतीना वाक्कीलाना यत्र निर्लज्जमवमानना तत्र साधारणाना किमु वक्तव्यम्। प्रभुतामत्ता कारागारकिङ्करा भारतीयान तृणायामन्यन्त।

तिलक कारागारगत विदित्वा तद्वैदुष्यावर्जितमना वेदविद्यावतामवतसो **'मोक्षमुलर'** तद्विमोचनाय भूरि प्रायतत। तत्करणेऽसमर्थोऽपि स तिलकस्य पुस्तकादिप्राप्तिसौकर्य सपादयामास। स्वकृत वेदानुवादपुस्तकञ्च तस्मै सादरमुपायनीचकार। तत तिलकस्य महानुभावतास्पृष्टो नूत्न काराधिकारी

-मॉमोमेन तस्य श्रमदण्ड निवर्तयामास। खरेप्रभृतीनामविरतयत्नैश्च वर्षमात्र एव कारागृहाद्विमुक्तिं प्राप निलक।

विमुक्त एव च पुरवर्यमे तस्मिन् सर्वदिक्षु जनताप्रहर्षोऽनिमूमिमस्पृशत्। सहस्रश पत्रैस्तन्त्रोमिश्च लोकमान्योऽभिनन्दनवर्षामिव प्राप।

## पुनश्च हरि ॐ

कारागृहान्मुक्ते लोकमान्ये, 'किं भवानित पर विधास्यति?' इति पृष्टे, "तदेव यत् पूर्वं कुर्वन्नासम्"–इति निःसंकोच जगाद। "पुनश्च हरि ॐ" इति शीर्षकेण प्रकाशिते केसरीलेखे च यं श्रमविश्रान्त्यानन्तर कारावासात् पूर्वं पर च स्वहेतवे परिश्रान्त तेभ्य कृतज्ञता प्रादर्शि। पराधीनाया जनतामात्र राष्ट्रकल्याणाय किं कर्तव्यमिति निःसंदिग्ध प्राबोधि।

एवदनु पौर्वात्यप्रयश्रेणिसपादको भारतस्य परम सखा मोक्षमूलरः महाराष्ट्ररत्नं न्यायमूर्ती रानडे चेति नरर्षभौ दिवं गतौ। तावाश्रित्य निलकेन मृत्युलेखं निवापाञ्जलिदेन। रानडेमहाशयेन सह सत्यपि विचारवैमत्ये, तस्य महानुभावता, राष्ट्रभक्तिं, समाजोत्थानप्रयत्नाश्च परमादरेण प्रशशस गुणैकपक्षपाती निलक।

१९०२ ख्रिस्ताब्दे जुलाईमासे चतुर्थतिथौ विश्वविश्रान्तकीर्ति, भारतीयनवजागृतेरग्रदूत, वेदान्तकेसरी स्वामी विवेकानदः ब्रह्मभूय गत। तस्मै श्रद्धाञ्जलिं समर्पयन्नलिखल्लोकमान्य–"सहस्रवर्षं यावत् भारतीयमध्यात्मशास्त्रं विदेशेष्वनुपमया प्रतिभया सडिण्डिमं प्राकाशयत् स्वामिवराज्यम्। नून सो भारतमातुरुत्तम पुत्ररत्नमासीत्। अनेन खलु भारतस्य वैदिकधर्मस्य च स्वरूप समुज्ज्वलित यशश्च विस्तारितम्। पूर्वं भगवता शंकराचार्येण क्षुण्णं मार्गं द्वादशशतकेभ्योऽनन्तर सम्प्रत्यपसर्पयद् विवेकानंद" एवमादि। तथैव आङ्ग्लतत्त्वज्ञस्य 'हर्बर्टस्पेन्सर'स्य निधनमाश्रित्य प्रशंसावचनैस्तं समभावयद् विद्याविलासी निलक।

## नवीना यातना:

आङ्ग्लं कर्जनगवर्नरो नूत्नो भारतशासको नियुक्त । तस्य हि वृत्त चरित्रवचनानुसारं प्रारभे स्वर्णमय, मध्याह्ने राजनमवमाने धारकूटमय मासीत्। आगतमात्र एव तस्मिन्नेवं वैदेशिकैं पूर्व कृता अनया निवारिता, स्त्रीणा शीलध्वसका शासका सैनिकाश्च कठोर दण्डिता । भारतीयसंपदा सुरक्षिता अक्रियन्त। किन्तु स्थानीयस्वराजसस्थाना स्वाराज्यमपहरता राष्ट्रियमहासभाप्रवृत्तौ च विघ्नानुत्पादयता, विश्वविद्यालयाना स्फूर्तिमुप मर्दयता, भारतीयजनताया कुटिलतामुत्प्रेक्षता च तेन, भारतीया नायका प्रजाश्च सुबहूद्वेजिता अभवन्। एकदा स 'मिथ्याभाषिणो भारतीया' इत्य ध्यक्षिपत्। नैतत्कटुप्रलापमहसतामर्पशीलो लोकमान्य । सो हि 'को मिथ्याभाषी ?' इति शीर्षकेण केसरीपत्रे साक्षेप न्यरूपयत्—"कर्जन खलु विना हेतुमनृतभाषी। तस्य चरित्रलेखक 'कोरिया' देश गतेन तेन कीदृश मनृतबहुलमभाषीति साधु निरूपितवान्। न चाय कर्जनस्तन्निरूपण मिथ्येति खडितवान्। अत अनृतभाषिणामग्रणी स एवेति वचन नास्थाने"। इति। कर्तुमकर्तुमन्यथा वा कर्तु समर्थमुद्दड भारतशासक को वैव तर्जयितु क्षम ऋते लोकमान्यात् ? प्रसङ्गान्तरे पुनरुन्मत्त कर्जन औरगजेबतुल्यमुक्त्वा भूरि निनिन्द। भारतस्वातत्र्यद्विप तमुद्दिश्य तिलकोऽसकृदुवाच - "कैनेडा-ओस्ट्रेलियावद् भारतमपि स्वायत्तशासन भवितुमीहते। न च तत्तथाकरणाद्वारयितुमीष्टे कश्चन। अस्मदीय लक्ष्य सुनिश्चितम्। न हि कापि शक्तिरस्मान् ततश्चालयितु समर्था।" इति

## वंगप्रदेश–विभाजनम्

वगीया साहसिका, भावुका, भारतशासनस्य चोपद्रवमूलम्, अतस्तेषा शक्ति विघटयितुम्, तानवमानयिताश्च विधातु वगप्रदेशस्य विभाजनमा योज्यत कर्जनेन। एतन हिंदु-मुस्लिमाना परस्परप्रद्वेषप्रकटनमप्यासीदुद्देश्या न्तरमस्य। शासकहतकस्य तस्य कुटिलाध्यवसायेन वगयुवानो भृश सतप्ता

अभूवन्। तत्र तत्र सभा आकार्य, जनपदात्रान्वायोऽस्य निरतक्रोध प्रकटितवन्तः केचि । किन्तु हन्त ! प्रभुत्वशक्तिमत्त कर्जनो न विचचार स्वस्य दुर्निर्णयान्। वङ्गप्रदेश इव प्रदेशान्तरेष्वपि समुद्भूतो महान् विक्षोभ । तिलकादिभि- र्वर्धित प्रक्षोभ परा काष्ठामस्पृशत् महाराष्ट्रे। जाड्गदेशोद्भूताना वस्तूना बहिष्कारकरणाय जनान् प्रोत्साहयितु प्रतिरथ्य सचरन्ति स्मोत्साहिना यूना दलानि। तै 'वंदेमातरम्' इत्यादिगीतिनापूर्यन्त दिशा मुखानि। सैनिकाना दडानाहतानप्यविगणय्य पर्यटन्ति स्म स्वातन्त्र्ययोगगामनीकानि। अपूर्वेणानेन विद्रोहेनाज्यप्रक्षेपेणेव समधुसन्धुक्षितक्रोधवह्नि । बहवस्तेन पशुवत् मारिता कारागारेषु च निगडिता.। तथापि पारतन्त्र्यपीडिता राष्ट्रभक्ता शासनभङ्गैकव्रतिनोऽभवन्। प्रसङ्गमिममभिलक्ष्य क्रान्ति- योगवरो लोकमान्योऽलिखत् केसरीपत्रे –

> अभिनवमदलेखाश्यामगण्डस्थलाना
> न भवति बिसतन्तुर्वारण वारणानाम्।

इति भर्तृहरिसूक्तिं स्मारयन्, कर्जनशासन वारणेनोपमाय, पुन भयशक्ते- स्तस्यापि प्रतिकारक्षमता प्रतिपादयन्, "तृणैरावेष्ट्यन्ते रज्जुर्भूत्वा नागोऽपि बध्यते" इत्यावेदयन्। प्राणान् परीहृत्य वैदेशिकशासन प्रतिकुर्वतास्त्वोत्साह मादीपयन्। विदेशवस्तूना मन्थानाय भूयोभूय सयुक्ति प्रचारयन्नासीत् तिलक । एतत्कर्म आरभ्यमाणमुद्धान्त्रोन इवाग्रे विज्ञानवतु बहुरूपस्य भवितेति दर्शयन्,

> नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
> स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्॥ —गीता २-४०

इति गीतावचोऽप्युदाजहार।

एतत्कालान्तरे राष्ट्रियमहासभाया अधिवेशने को नु सर्वदक्ष इति विविधविस्तारानुसरणादृतो मान्यदलपक्षपातिनको वा तत्पदमर्हतीति राष्ट्राभि-

मानिनोऽभिप्रेतवन्त । विनीतेभ्यो नैतद्गोचरम् । यङ्गभङ्गक्षुब्धाना वगीयाना विरोधो नोपेक्ष्य इति समुद्दीश्य तैस्तदा आङ्ग्लदेशे वगन् राष्ट्राभिमानी दादाभाई महाशय आध्यक्ष्यायानुनीत । स खलु सर्वजनसम्मान्योऽध्यक्षपदमलङ्कुर्वन्नेवमगादीत्–" बन्धव ! सभूय विना विश्रम स्वातन्त्र्याय प्रवर्तध्वम् । न हि स्वातन्त्र्यमन्तरा दैन्यप्रसूतान् क्षुधा–रोगादीन् निवर्तयितु शक्ष्यथ । न च राष्ट्रान्तरेषु ससम्मान स्थान लप्स्यध्वे" इति । एतदेवानुवदन् लोकमान्योऽलिखत् –" न हि स्वातन्त्र्य कृपाप्राप्य वस्तु । तद्धि सर्वैः सघीभूय प्रवर्तमानैश्च जनैराच्छेद्य रत्न भवति । दादाभाई ननु देवदूत इवास्मानुपदिदेश ना हितम् । तद्विस्मरण सर्वस्वच्युतये कल्पेत ।" इत्यादि लिखित्वा पुन सोऽलिखत् –"भिक्षां देहीति मार्गं त्यजतु राष्ट्रिया सभा। विदेशवस्तुत्याग, स्वदेशवस्तुमात्रोपयोग, राष्ट्रिया शिक्षा चेति त्रिसूत्र्या स्वीकार एव राष्ट्रियसमासाध्यमिति निर्भीक निश्चीयताम्"। राष्ट्रियशिक्षा, मद्यपानपरित्याग, स्वदेशिव्रतमिति त्रयस्याङ्गीकाराय सपरिकरबन्ध प्रावर्तन्त तिलकादय । प्रबुद्धा विदेशविदुषी एनी बेसन्ट अपि राष्ट्रियशिक्षा विषये तिलक सर्वात्मना समर्थितवती। आङ्ग्लभाषामुखेनाध्ययनरीतिर्ना रोचत महाराष्ट्रसिंहाय। यतो हि तत्र व्यर्थं समय शक्तिव्यय, विषयबोध प्रत्यवाय स्वदेश-संस्कृतिगौरवबुद्धेर्विलयश्चेति त्रिविध दूषण समापततीति भूयोभूयो निरदिशद् लोकमान्य ।

## सूरत–महासभा

सूरतनगरे सपन्नाया महासभायामेकत फिरोजशाहप्रभृतयो शासनरोष परिजिहीर्षवो विनीता, अपरतश्च साहसे श्रीर्वसतीति मतिमन्त तिलक अरविंदघोषादय स्वातन्त्र्यप्रस्तावसबन्धेन मिथ सघर्षमवापु । विनीतमान्यो **रासबिहारीघोष** विनीतैं विधिमुत्सृज्यैव प्रामुख्य प्रापित । वीनीतव्यप देश्याना धाष्ट्र्यमदमसहमानो महाराष्ट्रकेसरी तिलक केसरीव जनसम्मर्द परिष्कृत्य, मञ्चमारुह्य गर्जितुमुपचक्रमे। त तथा करणान्निवारयितु कृतमतयो

विरोधिन आसनानि, उपानह्, यच्चापि करगत तत्तमुद्दिश्याक्षिपन्। आत्म-त्राणनि स्पृहै तिलकपक्षीयैस्तदाघाता सधैर्य निवारिता। तिलकश्च हिमवानिवाचलस्तूष्णीमेतत् सहमानो व्याख्यानव्यापृत एवाभवत्। विनीत-गृहीतोऽध्यक्षश्च सभाविसर्जनमध्यापयत्। राष्ट्रहितैक्यबुद्धेर्लोकमान्यस्य चेत परिणामेनानेन भृशमखिद्यत्। किन्त्वनिवार्यामिमा परिस्थिति लक्ष्यीकृत्य तेन अरविंदघोषेण च पजावकेसरिण सद्य एव कारागृहान्मुक्तस्य लाला लाजपतरायस्य भव्य स्वागत विधाय, शान्तिवीराणा सघटनाय सभाऽऽकारिता। तत्र च स्वीयमावृत साधु प्रतिपाद्य शान्तिवीरा खिन्नमनसोऽपि कर्तव्यनिश्चित-व्रता विभिन्नानि स्थानान्यगच्छन्।

## द्वितीयो राज्यद्रोहाभियोगः

वगभगेन विक्षुब्धा जीवितनि स्पृहा केचन युवान उपायान्तरमपश्यन्त आङ्गलशासकाना क्रूरकर्मणा प्राणग्रहणतत्परा अभूवन्। कैश्चिद्युवभिर्द्वि-षाणा राज्यभक्ताना प्राणा आहृता विस्फोटकन्दुकै। तिलक एतदुद्दिश्य निपुण निवेदयामास यत् "शासन निर्दय पीडापर सल्लोकाना स्वाभाविकी कल्याणकरी प्रवृत्तिमुपरुन्धे। बलगर्विष्ठ च तत्र न्याय्यामपि जनताप्रार्थना शृणुते। प्राभवमत्ता अधिकारिणो निरङ्कुश प्रजा पीडयन्ति। एतस्यैवानर्थ-जालस्य फलमिद यत्स्फोटकन्दुकानामुपयोग" इति। एतादृश लोकमान्य-लेख राजद्रोहप्रवर्तक व्यापयच्छासन तन्मिषेण तमभियुज्य, सामान्यतोऽनुसर्तव्य च न्यायमार्गमुत्सृज्य, भारतीय-ज्युरिमतञ्चावगणय्य, षड्वर्षात्मक कारावास दण्डमकल्पयत राष्ट्रप्राणाय तिलकाय। एतदन्वयेन विधिविद्यापारदृश्वा तिलक स्वयमेव स्वीयरक्षाप्रवृत्त आसीत्।

स्वस्मिन् प्रवर्तितानामधिक्षेपाना निवर्तनपराणि तद्व्याख्यानानि तस्य धैर्य विधिविज्ञानवैचक्षण्यञ्च सुतरा प्राकाशयन्त। साधुवादञ्चालम्भयन् प्रज्ञावताम्। प्राड्विवाकेन दावरेण (योहि पूर्व तिलकस्य रक्षाकर्मणि वाक्कील आसीत्) दण्डाज्ञावचनात् पूर्व प्रचोदित सधैर्य मन्द्रमुवाच राष्ट्रतिलकस्तिलक

"एतन्न्यायालयादपि प्रभवतितरां काचित् सर्वव्यापिनी शक्ति.। नून सा इच्छति यद्बहिर्व्यापृतेन मया या राष्ट्रसेवा नानुष्ठातु शक्या सा कारागारगतेन तद्गतदु खानुभवेन चानुष्ठातु शक्यते-इत्यमिप्रैमि। कारागृहबद्धएवाह भारतमातरमधिक सेवितु प्रभविष्यामि।" इति।

## मांडले-कारावास

मनो यस्य सदा स्वस्थ निर्दोष च महात्मनः।
पाषाणभित्तय त वै लोहजाल वृणोतु वा।
कार्यनिष्ठस्य नो कारा किन्तु स्युस्तास्तपोवनम्॥

अथ राजद्रोहनिमित्त विदेशासनेन षड्वर्षात्मकेन कारागृहनिवासेनोपायनीकृतो लोकमान्य । अज्ञातसञ्चार स पूर्व अहमदावादनगर ततश्च ब्रह्मदेशवर्ति माडलेनगर नीत । तिलकस्य भोजनादिसपर्यार्थं कश्चिद् गुर्जर सूदो नियोजित । मन्दमतिरपि सो लोकमान्य सबहुमानमसेवत, विद्यामूर्ति सहृदयशिरोमणि च त राष्ट्रनायक कलयन् गुरुभावेनाद्रियत। 'आर्या उत्तरध्रुवदेशादागता' इति प्रतिपादयितु बहुविमर्शसनाथ गणितप्रमाणपुष्ट च पुस्तकमेक व्यरचि तिलकेन पूर्वकारानिवाससमये। विद्यावता मूर्धन्य सो नूतनेऽस्मिन् दीर्घकालीने कारानिवाससमये ततोऽपि विस्तृत सारिष्ठ च ग्रथमारचयितु मनो दधे। तेन हि पर्यालोचित यद्" भगवद्गीतामाश्रित्याद्यावधि रचितानि भाष्याणि टीकाश्च न तद्रहस्य यथार्थ परिचाययन्ति। अत, पूर्व-पश्चिमदर्शनाना सवादसनाथ गीताभाष्यमारचयेयम्" इति। गीताया कर्मयोग एव प्रतिपाद्यमिति पर्याप्तेनोहापोहेन युक्तिभिश्च साधु समर्थित विचक्षणवरेण तेन तद्ग्रथमणौ। ग्रथोऽय न केवल गीताया अपि तु भारतीयाना वैदेशिकानाञ्चोत्तमविचारमणीना मञ्जुषेव भवति। यद्यपि मधुमेहजुष्ट तच्छरीर तथापि दृढमनास्तिलको विद्याव्यासङ्ग न तत्याज। चतुःशताधिकान् ग्रन्थान् निपुण निरीक्ष्यैव महासत्त्वस्य 'गीतारहस्य'नाम्नो

ग्रथरत्नस्यैषा रचना कृता। कारवासकाले ग्रथरचनया सह जर्मन-फ्रेंच-पाली भाषाणा च अकुण्ठितधिषणावलात् स्वयमेव सुपरिचय प्राप।

माडले-निवसति तिलके, पतिव्रतानामुदाहरणरूपा तस्य सहधर्मचारिणी पञ्चत्व गता। तत्सवधिन तन्नीमदेशमवाप्याहतमना अपि 'बलीयसी केवलमीश्वरेच्छा', इति निश्चित्यात्मीयानेव समदिशत् "कठोरसमाख्यातना सहमाना सा नून विश्रान्तिसुखमधिगतवती। मम कष्टकलनयाऽनारत तप्यमाना तपस्विनीय नून जगदीश्वरेणानुकम्पिता। ता गता कलयतो मे हृदय विदीर्यते। किन्तु कोऽह भवितव्य प्रतिरोद्धुम्? तस्या यथाविधि और्ध्वदैहिकी क्रिया अनुष्ठापयन्तु"-इति।

माडले कारावासान्मुक्तेन तिलकेन विनीन-उद्दामेति यूथद्वयेन विभक्ताया राष्ट्रियमहासभाया सघटनाय भूरि प्रायतयत। आङ्ग्लनारीरत्न **एनी बिसेंट** तत्र तत्सहायाऽभवत्। इय गौरवशालिनी विदुषी हिंदुधर्मे शास्त्रे चामन्दा श्रद्धा प्रज्ञाऽन्वावहत्। यथायथ भारतीयप्राचीनग्रथरत्नान्यधीत्य च पाश्चात्यसस्कृत्या विमुग्धाना विमूढाना चेतासि भारतीयसस्कृतिनिधि प्रत्याचकर्ष। एतेन हिंदुधर्मप्राणस्य लोकमान्यस्य तस्या महानादरोऽवर्तत। ताभ्या सम्मन्त्र्य *'स्वराज्यसघ'* नाम्नी राजकीया सस्थाऽस्थाप्यत। तद्द्वारा जनान् स्वराज्याभिमुखान् कर्तुं च ताभ्या भृशमायतितम्।

एतदन्तराले नवीन-उद्दामति उभयेपामपि समानादरपात्रस्य **श्री** गोपालकृष्ण गोखले महाशयस्य ४६ वर्षीयस्यैव जीवनदीपो निर्वाणमगमत्। बहुशो गोखले-तिलकयो सत्यपि मतिवैचित्र्य उभावपि राष्ट्रस्य परमभक्तौ, परस्पर-गुणाकृष्टौ चास्ताम्। गोखले-महाशयमुद्दिश्य निवापाञ्जलि वितरस्तिलक *"मुहूर्तं ज्वलित श्रेयो न तु धूमायित चिरम्।"* इति व्यास-वाक्यमुद्धृत्य, दिव प्रस्थितस्य सुहृद उदारता पुरुषार्थपरता च वर्णयामास।

## राजद्रोहस्य तृतीयोऽभियोग

अथ लोकमान्यस्य षष्ट्यब्दपूर्ति लक्ष्यीकृत्य महाराष्ट्रजनै एकलक्षात्मक धन सचीय तस्मै समर्पयितु निर्णीतम्। तदर्पणाय च महती सभाऽऽकारिता॥

किन्तु हन्त! महोत्सवदिनस्य प्रातरेव तिलको राजद्रोहारोपपूर्वं सैनिकैर्निगृहीत। स्वराज्यसंघान्वयेन बेलगाम-अहमदनगरयो कृतानि व्याख्यानानि राजद्रोहभूयासीत्यासीच्छासनमतम्। अभियोगेऽस्मिन् तदानीं राष्ट्रनायको मतिमता वरो महम्मदअली जिन्ना तिलकनिर्दोषता प्रतिपादयितुं प्रावर्तत। तद्वैचक्षण्येन 'लोकमान्यो निर्दोष' इति परामृश्य न्यायाधिकारिभि शासनाभियोगो भर्त्सित। तिलकेन सह स्वाराज्यसंघप्रवृत्तिरपि निर्दुष्टेति तैराख्यायि। अथ प्रथमविश्वयुद्धे भारतीयाना साह्य कामयमान शासन नेतृणामनुनयव्यग्रमासीत्। तदा माटेग्युप्रभृतयो वरिष्ठा आग्ला भारतीयनायकेषु तिलकमेव सर्वातिशायिप्रभावममन्यन्त। तिलकस्तु 'स्वशासनवितरणप्रतिज्ञा कुरुत, नान्यथा युद्धसहाया भवेम' इति निर्भीक तानभ्यभाषत।

गांधि-तिलकयो १९०१ खिस्ताब्दे संवृत्ते कलकत्तानगरे राष्ट्रियमहासभाधिवेशने सर्वप्रथम परिचयोऽभवत्। तिलक शास्त्रपरायण कर्मयोगनिष्ठ, गांधिस्तु अहिंसैकव्रती, अनासक्तमना, परमेशसमर्पणनिष्ठश्चेत्यनयो राष्ट्रभक्तो समानायामपि क्वचिन्मतवैविध्यमवर्तत। अथापि प्रथमपरिचय एव तिलको गांधेरसाधारण्य विवेद। तेन हि गांधिमधिकृत्य "अय जीवितादपि राष्ट्रमधिक मन्यते। नन्वेतत्कंधरगता राष्ट्रधुर सुस्थिता कलये।' इत्यभाणि।

## राष्ट्राभिमानमूर्ति:

**सर वेलेन्टाईन चिरोल** नामा आङ्गलपत्रकार (Indian unrest) 'इन्डियन अनरेस्ट' इति नाम्ना पुस्तकमेकमलिखत्। तत्र भारतीयजनता, समाज, हिंदुधर्मं च भूरि निनिन्द। तिलकन्तु स आङ्गलशत्रु भारतविक्षोभबीजमुपद्रवकर्तारञ्चाख्यापयत्। चिरोल अत्युन्मत्तो भारतीयान् तृणाय मन्यत। तिलक आत्मनो मिथ्याऽकीर्तिकर तमभियोक्तुमियेष। तच्च लडनन्यायालय एव कर्तुं शक्यमथापि स लडननगर गत्वा तत्रत्य वरिष्ठन्यायालयञ्चोपसृत्य चिरोलमभियुक्तवान्। तत्र न्यायाधिकारिभि कृताना कूटप्रश्नाना

तिलककृतानि उत्तराणि तत्रत्याना बुद्धिमद्वरेण्यानामपि विस्मापकान्यासन्। 'तिलककृताभियोगाङ्गीकारे तस्य यशो वर्धेत भारतजननायाश्च तद्गत स्नेह शतगुण सपद्येते'ति भीत्या तिलकाभियोगो न्यायालयेन निरस्त। अय च साहसैकमतिस्तिलक ऋणातिशयभारचिन्ता विस्मृत्य, चेत-क्षोभञ्च विधूय, भारतमातु स्वातत्र्यप्रचारे तत्रात्मानमनारत व्यापारया-मास। दशमासास्तत्र व्यतीत्य प्रतिनिवृत्त राष्ट्रनायक तमभिनन्दितु मुबापुर्यां लक्षशो जना अहमहमिकया परापतन्। तेनर्ण कृत्वा कृतम्याभियोगव्ययस्य च तन्निवारिता अपि लोका पूर्तिमकार्षु।

## महाप्रस्थानम्

अथातिकार्यभारादजस्त्र कष्टक्लिष्ट कृशातिकृश च कायमुद्वहन्, भारत-स्वातत्र्याप्रवृत्तो लोकमान्यो दिवारात्रमपरयन्, शरीरदौर्बल्यञ्चाविगणयन्, निर्वाणदीप इवाधिक दिदीपे। सोऽहि मूर्तिमान् स्वातत्र्यवह्निर्मापण-पर्यटने-न्धनैरनेकज्वालावकीर्णोऽघक्षत्।

मुबापुर्याम् १९२२ खिस्ताब्दे जुलाई २३ दिनाङ्के तज्जन्मदिननिमित्त सर्वतोऽभिनन्दनान्यवाप। स हि २६ दिने श्लेष्मणाऽविष्ट। तद्द्वितीये दिने च त्रिदोपव्याधिस्तमात्रमत। तनोरभानता ततश्व प्रज्ञाविभ्रम इति दिन-चतुष्टय समतप्यत। अगस्तप्रथमदिने रविवासरे मध्यरात्रौ राष्ट्रशृखला-विभेदव्यग्रो भारतमातु सुपुत्रशार्दूल, हा, हन्त! सर्वदिशु तत्सतती रुदन्ती-र्विसृज्यामरलोक प्रातिप्ठत।

अस्य निर्वाणमाकर्ण्य क्षणादेव मुबापुरीजना भूकपक्षुब्धार्णवा इव तदन्तिमदर्शनलालसा लक्षश परापतत्। पूनादिभ्यो नातिदूरनगरेभ्यश्च जनप्रवाहोऽत्वरित तमुपधावति स्म। साश्रुनेत्रा गाधीप्रभृतयो नेतार तिलक-काय स्कन्धमारोप्य, प्रसिद्धस्मशानभूमिरपूर्वजनसम्मर्दायापर्याप्तेति विस्तीर्णं चौपाटीनामक सागरतटमनयन्। तत्रैव च तद्देहस्याग्निसमर्पणविधिरन्वष्ठीयत।

दिवि स्थित लोकमान्यमुद्दिश्य, योगिप्रवर अरविंद अभाषत –"लोकमान्य खलु स्ववीर्यवैर्येणोत्तमपुरुषेषु स्थानमवाप्तवान्। स खलु भारतीयेषु स्वातन्त्र्यस्य भावना नवीनामोजस्विनीं च चेतनामपुरक्षयत्। स एव न स्वातन्त्र्यस्याग्रदूत"–इति ।

महात्मा गांधि सगद्गदमभाणीत् –"नूनं मम आश्रयस्तम्भ पतित। लोकमान्यो हि भारतीयजनताया दैवतमभवत्। राष्ट्रसेवैव तस्य धर्म। भारतीयस्वातन्त्र्य हि जीवनसर्वस्वमित्यभ्युपगम्य, स सर्वान् क्षणानखिलाश्च रक्तबिन्दून् भारतस्वातन्त्र्ययज्ञेऽजुहोत। नरशार्दूलोऽय सदैव स्वातन्त्र्यमनमारटन सुख, स्वजनान, शरीरस्वास्थ्यञ्च विस्मृत्य, सर्वात्मना जननीमसेवत। अजातशत्रु पुरुषर्षभ सो नाङ्ग्लेभ्योऽपि द्वेष्टि स्मापि तु तच्छासनदास्यमसहमानस्तानमर्षणापश्यत। अय किल पुण्यश्लोकोभिनवभारतस्य पितेति दृढ प्रत्येमि" इति ।



लोकमान्यो हि निधान विद्यानाम, आधान सदाचाराणाम्, मूर्ति साहसस्य, विग्रहो धैर्यस्य, पिण्डीभूता दीप्ती राष्ट्रभक्ते, सदेहा निष्ठा भारतीयसस्कारपरपराया, उद्धर्ता दलितानाम, बन्धु सामान्यजनस्य भारतीयनवजागृते राष्ट्रीयतायाश्च जनक इति यशस्वी विराजते।



तिलककृत हि दुधर्मलक्षणम –

प्रामाण्यबुद्धिर्वेदेषु साधनानामनेकता।
उपायानामनियमो ह्येतद हिन्दुत्वलक्षणम॥





# कविगुरु रवीन्द्रनाथः

प्राक् प्रभातात् जगतीतलं नूनं गाढेन तमसाऽऽच्छन्नं भवति। सूर्यसारथि-रुणः पूर्वमुदीय तमःपटलानपसार्य च, प्रकाशपुञ्जस्य स्वामिनः सूर्यस्य प्रवेशानुकूलतां पश्यति। इममेव प्राकृतं क्रममनुसरन्निव भारतवर्षं स्वातन्त्र्यसूर्योदयस्य पूर्वशताब्दे विविधक्षेत्रेष्वप्रतिमप्रभावाणां पुरुषपुङ्गवानां प्रसवभूमिरवर्तत।

वर्षाणां शतानि वैदेशिकदास्यमनुभवतोऽस्य देशस्य प्रतिभासूर्यं परां ग्लानिमवाप। धर्मो विवेकशून्यै रूढिग्रस्तैश्च धर्मध्वजिभिः कदर्थीकृतः। समाजश्च सङ्कीर्णमनोभिः परस्परविद्वेषपरैर्निर्बलतां प्रापित आसीत्। किन्तु हन्त! वेदानां रामायण–महाभारतादीनां च प्राणवतां ग्रन्थानां परिशीलनं न सर्वथा निःशेषतां गतमभूत्। न च नररत्नानां साक्षात्कृतधर्मणां प्रसवोऽपि कुण्ठितोऽभवत्। अत एव जनसाधारणस्य चेतः परमेश्वर-

परायण सद्भावसपन्नञ्चाविद्यत। श्रद्धाधनाया जनताया सस्कारगमृद्धिश्च तदा तदा समुद्भूतै साधुचरितैर्महात्मभि पोषिता सर्वधिता चान्ववर्तत। रूढिग्रस्तेष्वपि श्रद्धाजडेष्वपि च जनेषु, विशुद्धा धर्मास्था तैलदीपज्योतिरिव मन्दायमानाऽपि चकासमाना व्यराजत।

एतादृशे प्रभातप्राये भारतीयजीवननमसि प्रादुरभूद् विरलविभूति प्रभापूर्णरविरिवापरो रवीन्द्रनाथ ठाकुर। अस्य जन्ममङ्गलदिन खिस्तानुसार ७ ५–१८६१ अभूत्।

श्रूयते ह यत् खिस्तस्याष्टमशताब्दे सशान्तिविक्षोभे वगप्रदेशे, हिन्दूराज्य सुप्रतिष्ठामवाप। तत्र बुद्धधर्मानुयायिभि प्रध्वसितप्रायस्य हिन्दुधर्मस्य पुन प्रतिष्ठार्थं कनौजप्रदेशात् पञ्च विद्वासो ब्राह्मणा सबहुमान निमन्त्रिताऽभूवन्। विद्यावन्त कार्यकुशलाश्च ते विप्रवरा तेषा प्रसूतिश्च वगप्रदेशस्य सामाजिकस्य धार्मिकस्य सास्कृतिकस्य च नवीनाभ्युदयस्य प्रमुखा प्रयोजका आसन्निति वदन्ति–इतिहासविद।

पञ्चस्वमीषु ब्राह्मणेष्वन्यतम आसीद् दक्षो नाम यथार्थनामा विद्वान्। तद्वश्य एवासीदस्य लेखस्य नायको रवीन्द्रनाथ।

रवीन्द्रनाथस्य पूर्वज पचानन तदानी गोविंदपुरनामके (अद्यत्वे कलकत्तानाम्नि) ग्रामे समागत्यावसत्। वाणिज्यप्रवीणैराङ्गलै सह वाणिज्येन स भूरि धनमविन्दत। तद्वशमणी रवीन्द्रनाथस्य पितामहश्च द्वारकानाथोऽप्रतिमेन पाटवेन विविधकार्यकलापे परा ख्यातिलभत। उदारमना म विद्याकलाना सवर्धक सज्जनानामाश्रय, राष्ट्रियसस्थानाञ्च परिपोषक आसीत्। धर्म-समाजविषयकास्तद्विचारा आङ्गलसपर्काद्वा, राजा राममोहनरायस्य सख्याद्वा, हिंदूसमाजस्य विचारदारिद्र्यदर्शनाद्वा, प्राचीनपरपराविमुखा इव प्रातीयन्त। तथापि स उपनिषदादिसारिष्ठग्रथाभ्यसनेन प्राचीनानामुदारमताना समुपस्थापक परिपोषकश्चासीद्। आङ्ग्लाना देश स द्विवारमगच्छत्। तस्योदारामुन्नता च जीवनदृष्टि समीक्ष्य प्राच्यविद्याविद्वान्

सस्कृतम्, आङ्ग्लभाषा, सगीतादय कला, इतिहासादयो विषयाश्च गृहागतैरध्यापकैरध्यापयत्स बालानिति बालसहजाना क्रीडाना कृते नालभ्यत पर्याप्तोऽवसर । एतेन पुस्तकादिपठनाद् व्यरज्यत रवीन्द्रस्य क्लान्त कोमल च चेत । रवीन्द्रस्य सर्वे भ्रातर स्वसारश्च विविधविषयेषु प्रतिभाजुषो लेखनकर्मसु च सिद्धप्राया अभूवन्। सर्वे सुरूपा प्रतिभावन्तोऽमन्दसत्त्वाश्चेति तषा सनिधौ वृद्धि गच्छतो रवीन्द्रस्य सहजप्रतिभा नियतशिक्षामान्द्येऽपि विकासशीला व्यराजत ।

बाल्ये बहुसतत मातु पर्याप्ति प्रेमालब्धवतो बालस्य सेवानियुक्ता भृत्या कीदृशी सेवा निरवर्तयन्त इति प्रतिपादयन्नलिखद रवीन्द्र —भृत्यो मामेकत्र प्रकोष्ठकाण उपवेश्याभणत्—"मयाऽत्र श्वेतचूर्णेन रेखा-मर्यादा क्रियते। इमामुल्लघ्य गच्छसि चेत् लक्ष्मणरेखामुल्लङ्घितवत्या सीताया दुरवस्थामवाप्स्यसि" इति । ऋजुमति मामेव भाययित्वा कारामिव च प्रवेश्य, ग्रामकुक्कुरायमाण स भृत्याधमो यथेच्छ बभ्राम। अथैकादशवर्षदेशीयस्यास्य यज्ञोपवीतसस्कारोऽक्रियत। उपदिष्टगायत्रीमत्रश्चाय तन्मन्त्रमतिस्नेहेना जपत ।

"नून गायत्रीमन्त्रोऽस्माक राष्ट्रियमत्र" इति च स असकृदाम्नाति स्म । तत प्रकृतिप्रिय स पितृसनाथ हिमवन्त जगाम। प्रकृतिसुषमावर्जितचेता रवीन्द्रस्तत्र सुतरामरमत। नगाधिराजस्य रामणीयक पश्यतोऽस्य मनो न तृप्ति जगाम। शिखरात् शिखरमुत्प्लवन् स लतागुल्मान्, पुष्पफलभारनतान् वृक्षकान्, निर्मुक्त मन्द्रध्वनिना दिशा मुखानि मुखरयन्ति निर्झराणि च विभावयन्ननायास कवनकर्मणि व्यापृत आसीत्। हिमाद्रे कमनीयतया विवशितमना स सुतराममादत। पितु सकाशाद् विराजमानाना नभसोऽग्न्यनेत्ररूपाणा नक्षत्रताराणा विशेषान्प्यविन्दत्। पितुर्मन्द्रस्वरेण गीयमानान्युपनिषद्वचासि च श्रावश्राव रवीन्द्र परा मुदमध्यगच्छत्।

गृहं प्रतिनिवृत्तः स हिमाद्रिभ्रमणेनानुभूतानां विशेषाणां हृदयंगमेन वर्णनेन सर्वेषां मनांस्यावर्जयत्। स्वरचितानां काव्यानां मधुरपाठेन च सर्वेषां प्रियोऽभवत्। द्वादशवर्षीयेण रवीन्द्रेण रचितं 'अभिलाषं' इति वंगकाव्यं तत्त्वबोधिनीपत्रिकायां प्रकाशमवाप्यानेकेषां विस्मयमजनयत्।

## साहित्यसेवारंभः

अध्ययनविमुखः स शालान्तरमध्ययनाय प्रवेशितः। किन्तु पूर्ववदेव स शालायां पाठ्यमानान् विषयान् नीरसाननुभूय परिवारजनैः प्रचोद्यमानोऽपि शालात्यागमेव वरमकल्पयत्। शालामगच्छन्नपि नायमध्ययनविरतोऽभवत्। स गृहगत एव स्वरोचकान् साहित्यग्रन्थानध्यैष्ट। गृहमागतैश्च विद्वद्भिर्विविधानां विषयाणां परामर्शपरोऽभवत्। तदानीं वंगप्रदेशे राष्ट्रियभावनापरिपोषकं साहित्यं प्राचुर्येण निर्मीयते स्म। अयमपि तत्प्रवाहपतितो राष्ट्रियभावावेदकानि काव्यानि निर्ममे। हिंदुमेला, इति सत्रके राष्ट्रियभावाविष्टानां सावत्सरिके सम्मेलने चतुर्दशहायनेन रवीन्द्रेण स्वनिर्मितं काव्यं पठितम्। तत्तस्य प्रतिभापरिचायकमभूद् यथा प्रसिद्धे 'अमृतबजारपत्रिका'ख्ये आङ्ग्लभाषापत्रेऽपि तत् सबहुमानं प्रसिद्धिमवाप। तेषु दिनेषु वंगवाङ्मयस्योत्तमेषु रचयितृषु 'बंकिमचंद्र चटर्जी' (वंदे मातरं गीतस्य रचयिता) अतिप्रसिद्ध आसीत्। अनेनाभिरूपाणां परिषदि स्वस्मै समर्पितां पुष्पमालां तरुणस्य रवीन्द्रस्य कण्ठे सस्मितमारोपिता। किमित्येव क्रियत इति पृष्टश्च रवीन्द्रस्य सन्ध्यागीतानां प्रकर्षं निवेद्य, स एव मालामर्हतीति प्रतिपादयामास। प्राचीनवैष्णवभक्तानां शैलीमनुसरताऽनेन भक्तिपूर्णानि गीतिरत्नानि रचितानि। गीतीनामुपादेयताविषये सन्दिहानश्च स तल्लेखकं कश्चित् प्राचीनो भक्तकविरिति च प्रकाशयामास। गीतीरिमाः पठित्वा जर्मनदेशे वसन् निशिकान्तनामा काव्यकोविदो बङ्गीयः परमप्रीतो रवीन्द्रमेतासां प्रकाशनायाभिनन्दयामास। एवं साहित्यक्षेत्रे षोडशवर्षीयः सकाव्ययम्. पूर्वमेवायं विशिष्टेषु रचयितृषु गणनामवाप।

# पुनरध्ययनोपक्रमः

काव्यादिरचनानिपुणस्यापि, विविधविद्याशाखाविपश्चितोऽपि जनस्य विना नवीनशिक्षा न जीविकालाभो न च सामाजिक गौरवमिति परिपश्यन् महर्षी रवीन्द्रस्य शिक्षण कथमापादनीयमिति चिन्तयन्नासीत्। रवीन्द्रस्याग्रज सत्येन्द्रनाथ तदानी अहमदाबादनगरे मण्डलन्यायाधीश आसीत्। स हि आङ्ग्लभूमि गत्वा नागरिकसेवापदवी (आइ सी एस्) प्राप्तवान्। अचिरादेव च इंग्लण्डदेश गमिष्यन् स "रवीन्द्रो मया सह तत्र गत्वाऽध्ययन करोतु। मया गृहीता, वाक्कीलसबधिनी वा पदवी लभताम्", इति पितर न्यवेदयत्। तथाऽस्तु इत्यनुमतश्च स रवीन्द्रसनाथ पूर्वमहमहदाबाद ततश्च मासचतुष्टयात् परमाङ्गलदेश जगाम।

आग्लदेशे भ्रातृपत्न्या तच्छिशुभ्या च सह वसन्नय सुखेन कञ्चन कालमनयत्। किन्तु महाविद्यालय प्रवेशित तदीये छात्रालये च निवेशितो भूरि मन सतापमन्वभवत्। परिवारजनै सह सवर्धितस्य स्वच्छन्दप्रवृत्तेश्चास्य छात्रालयनिवास कारागृहवास इव बभूव। तत कयोश्चिद् नि सतानयोर्दम्पत्योर्गृहे निवेशितोऽप्यय न चेत स्वास्थ्यमवाप। ततश्च विरामदिनानि भ्रातृनिवासेऽतिवाह्य पुन परिवारान्तरेण सहोषितु विसृष्ट। अस्मिन् स्निग्धे 'स्कॉट' परिवारे दम्पती कन्ये कुक्कुरश्चावसन्। कन्ये त भ्रातरमिव तन्माता च सुतमिव सिषेविरे। कुक्कुरस्तु तल्लालित एव भोजनाभिमुखो बभूव। किन्तु न तावताऽस्य मनोऽध्ययनप्रियमभवत्। मिथ विश्रम्भकथासु काव्यगानेन काव्यरचनया वा स कालमनैषीत्। आग्लवासिजनाना विशेषतश्च स्त्रीणा स्वातत्र्य तदुद्भवा च भद्रता स तदा तदा स्वजनान् पत्रै प्राबोधयत्। अस्याध्ययनपराङमुखी वृत्ति तत्रस्थजनप्रीर्ति च विभाव्य साशक पिता त शीघ्रमेव स्वदेश प्रतिनिवर्तितुमादिशत्। यजमानगृहस्य प्रेम्णा गृहगमनोत्साहेन च युगपत् कृष्टमना स प्रीतिक्लेशाभ्या सममेवाविष्टो गृहाय प्रतस्थे। प्रस्थानसमये गृहस्वामिनी प्रेम्णा तद्धस्त गृहीत्वा साश्रुगद्-

गदमुवाच "भद्र ! किन्तु त्वया तूर्णमेव गन्तव्यम् ?" एष विश्लेषप्रसगश्च कविवरेण गृहमागत्य 'दुर्दिन' इति भावपूर्णेन लघुकाव्येन सकरुण निरूपित । गृह प्रत्यागतेन रवीन्द्रेण नैका गीतय आख्यायिकाश्च निर्मिता । तत्परिवारजनै प्रकाश्यमाना पत्रिका रवीन्द्रस्य रचनाभिरापूरिता एव स्थितिमत्य चतश्चुम्बिन्यश्च आसन् ।

## आध्यात्मिकी अनुभूति

रवीन्द्र स्वस्मृतिग्रन्थे, 'मानवस्य धर्म' इति नाम्ना च प्रसिद्धे व्याख्याने, स्वस्यालौकिकीमनुभूतिमवर्णयत् । सदरस्ट्रीटस्थे स्वगृहे स तदा भ्रात्रा सह वसति स्म । एकदा प्रात स नवोदितस्य भानो पुण्यप्रकाशेन विराजित नभो वृक्षाश्च विभावयन्नासीत् । तदैव-"सहसैव मे चक्षुषोरावरणमपसरदिवालक्ष्यत । समग्र विश्वञ्च विस्मयावहन लसहितन तेजसा, सौंदर्यसारेणानन्दसदोहेन चाभिवृष्टमिवाऽजायत । सर्वविधो मानस शारीरकश्च सतापो विगलन्नासीत् । सकलमपि परित स्फुरज्जगन् मङ्गलरूप प्रास्फुरत् । विश्व समन्ताद् दीप्तार्कद्युतिमदप्रमेयञ्च व्यलोक्यत । सर्वेषामपि प्राणिना भूतानाञ्च स्थूल रूप विलयमगमत् । सर्वञ्चैतदपूर्वया भासा विद्योतमान प्रतीयते स्म" इति ।

अनुभवोऽयं चिरमन्ववर्तत । तदा स न भौतिकै करणैरपि तु अनिर्वचनीयेनान्तरेण दीपेन चकासदिव विश्व साक्षादकरोत् । चतुर्दिनात्मकेऽस्मिन्नात्मानुभवे वर्तमानस्यास्य विमारि विश्व मनत्वम् अपूर्वेणैव रामणीयकेन च विराजमानमदृश्यत । अनुभूतेरस्या अपगमात्पर 'मधिस्थितौ' वर्तमानस्यास्य चेतो जागतिकान् भावान् चित्रगतानिव छायारूपानिव च प्रापद्यत । आत्मप्रकाशप्रवाहे प्रवहन्नाऽनेन 'निर्झरर स्वप्नभाग" इति मजव गीतमरच्यत । रचनामिमा च स 'निर्गतबन्ध जगत्प्रवाहमनुगुर्वन्ती' प्रतिपादयामास । अस्यानुभवस्य प्रभावपिहितनाम्या अपि भावनूत्यात्मिका गीतयो रचिता । तासा सग्रहश्च 'प्रभातसगत ति नाम्ना प्रकाशीकृत । एतासु रचनासु पूर्वापेक्षया नवीन एव भावौघ, भाषामाधुर, काव्यपाकश्च दरीदृश्यन्ते ।

एतदनु कविवरेणानेन काव्यद्वय रचितम्। "अनन्तं जीवनम्" "निरवधि निधनम्" इति सज्ञकाभ्यामेताभ्या काव्याभ्या स सर्गस्थितिसहाराणा घटनामेवमवर्णयत् –"जीवनं मरणादेव नवीनतामादधाति। नास्ति मृत्यो· र्मृत्युः। प्रतिवर्ष जीवनमरणे अनुभवन्नेवास्मि"। इत्यादि निरूपयन्नान्तिमाख्ये –"अनन्ते कालादिमर्यादाशून्ये चास्मिन्नाकाशे पिहितलोचन जगत्पितामह उपविशति। ध्यानमग्नमिम धातार परित नि शब्दा शान्तिर्विलसति। सहसैव ब्रह्मा चक्षुषी उन्मील्य मन्त्रघोषमातनोति। तदैव वह्निगोलक इव प्रकाशपिण्ड प्रकटीभूयाविरत चक्रमिव भ्रमति। तत पालको विष्णुर्महान्त शख नादयति, येन प्रकाशगोलक स विनष्टविक्षोभो भवति, प्रभवति च गोला दस्माद् गोलान्तरम्। पृथ्वीरूप गोलान्तरमिद शनै शैत्यमाप्नोति। सा च नाना- विधाना सस्यादीना प्राणिनाञ्च प्रसवाय कल्पते। शश्वत् चक्रवत् परिभ्रमणेन प्राणिजातस्य विकृताचारैश्च श्रान्तेऽस्मिन् भूगोले, प्रार्थित शिव स्वीय भास्वर रौद्र चक्षुरुन्मीलयति। ततश्च सूर्यचन्द्रतारासकीर्णे विश्वे महान् विस्फोटो जायते, ग्रहनक्षत्राणि च सुदूर विक्षिप्यन्ते। पुनश्च सर्वं विलीयते। यथापूर्व च नि शब्द शून्यमिव च भवति। ब्रह्मा तदा पुनश्चक्षुषि निमील· यति।" इति। भौतिकविज्ञानस्य प्राचीनसृष्टिप्रतिपादनस्य च सगति- भूयिष्ठा हीय कविवरस्य काव्यमयी दृष्टि।

एतेषु दिनेषु रवीन्द्रो यथेच्छ काव्यादिनिर्माणे व्यापृतोऽनर्गल जीवन व्यतीतवान्। त्रयोविंशतिवर्षस्य त गार्हस्थ्ययोग्य मत्वा, महर्षिरेकादशहायन्या भवतारिणीनाम्न्याऽशिक्षितया कन्यया सह तस्य विवाह कारयामास। भवतारिणी शिक्षायामिव रूपेऽप्यतिसामान्याऽऽसीत्। विवाहात् पर 'नलिनी' इति नाम्ना विख्याता सा गृहकर्मदक्षा पतिप्राणा च सती कविवरस्य मन साधु समतोषयत्। सप्तविंशतिवर्षव्यापिनि तयोर्दाम्पत्यसमयेऽनन्यपुण्यौघसाध्यया प्राचीनहिन्दूपत्नीदृष्टान्तभूतयाऽनया, नवशिक्षादिन्यूनता सर्वथा विस्मार्य, सर्वेषा प्रीतिरादरश्चाधिगतौ। कविवरस्य तु सा पत्नीसुलभ मातृसहज च प्रेम समर्प्य मन गाग्राज्ञी बभूव। तादृश्या अर्धाङ्गनाया मध्येवयसि शाश्वतविरहेण

नून स भृश दु खित आसीत्। अथापि स्वभावधीरोऽय न कदापि स्वसन्ताप बहिराविश्चकार।

तेषु दिनेषु नारीणा शरीरसुषमा, हावादिविभ्रमचातुरी, समाश्लेषसौख्य च विपर्यीकृत्य सुबहु कवित कविवरेण। कलयति च स –"यदि सा स्थूल-भोगायैवाराध्यते चेदन्ते विरसता ग्लानिरेव च फलमिति निश्चितम्।" पुनश्च स निरूपयति –"भोगेच्छैव शोकमूलम्। सा हि महाजाल यत्र निमग्न आत्मनः स्वातन्त्र्य जहाति।" "भोगा न भुक्ता वयमेव भुक्ता" इति भर्तृहरिवचो नून त्रिकालावितथम्। एकत्र प्रकृतिविलासाख्ये गीतिकाव्ये स निरूपयति –"मायामयीय प्रकृतिभ्रान्तिजाल विस्तारयति यत्र मुग्धा प्राणिनो गृह्यन्ते। शरीरप्रेम्णा सुखमधिगन्तु प्रवृत्ता वय न प्रेम नापि सुख लभामहे। अन्ते विषाद एव नो फलम्"। इति।

## श्रमिकाणां सहाय.

लेखन कवितागान च भवेन्नाम गौरवास्पद कर्म। किन्तु न तावतैव जीवनसाफल्यमिति मन्यमानो महर्षि कवनमत कोकिलायन्त रवीन्द्र स्वस्य विस्तृता कृषि पर्यवेक्षितु नियोजयामास। तत्कुर्वाण प्रकृत्यैव प्रकृतिप्रियो रवीन्द्रोऽपि नद्यास्तटगताया सस्यश्यामताया भूमे रामणीयक दर्शदर्श मुमाद। स्वभावसरलानथदरिद्रानपि परमेश्वरास्थावत कृषकान्, अहर्निश विना विक्षोभ क्षेत्रेषु कर्मव्यापृता कृषकललनाश्च दर्शदर्श स तेषा तासा च दु ख-भूयिष्ठ जीवन कारुण्यप्रसूतनौदार्येण सुखपूर्ण समाश्वस्त च विधातु प्रायतत। जलप्रायो हि बगप्रदेश। अतस्तत्र तत्र जलाशयाना नद्यीना गुर्वीणा च नदीना दर्शन सर्वत्र सुलभम्। रवीन्द्रस्य कविहृदय तासा लोकमातृणा दर्शनेन सुतरामनन्दत्। तस्य कवनशक्तिश्च मधुरकलकलप्रवाहमनुकुर्वती अनारत सगुञ्जनमाविर्बभूव। क्षेत्राण्यधिवसता तत ग्रामकन्यकाना स्वभावमुग्धानि चरित्राणि साधु चित्रितानि। तासा रूढिकुण्ठित जीवनसौदर्य नैकेषूपन्यासेषु गुम्फितम्। नागरिकजीवनस्य कृत्रिमा जीवनरीति ग्राम्यानामकृत्रिमा

जीवनास्था च तुलयतोऽस्य चेता ग्राम्येषु समवेदनापूर्णं पक्षपातप्रवणश्चाभवत्। एतषु दिनेषु कृतासु तदीयरचनासु भारतीयजनताया वास्तविक जीवनमधु प्रस्रवदालक्ष्यते। अय हि ग्रामजनमध्यगतस्तन्निवास, तस्य दृष्टे भारतीयजीवनाध्ययने, समग्रजनतायाश्च प्रतिनिधिकवित्वसपादने, बहूपकृतवानिति निश्चप्रचम्। धर्मविपर्यिणी बहूना भ्रान्तिमभिलक्ष्य सोऽलिखत् – "पाप-पुण्यविषया अस्मद्विचारा बहुधा विकृता विभाव्यन्ते। **सर्वेषु साम्यबुद्धिः करुणा चेति धर्मस्य शुद्धं रूपम्।** धर्मो नु प्रेममूल एव भवति"। इति।

## राष्ट्रसेवा

तेषु दिनेषु बगप्रदेशे महान् राजकीय सक्षोभ प्रावर्तत। बगीयान् स्वातन्त्र्यलाभाय महान्त विद्रोह कुर्वतो विभाव्य, तेषु जातिभाव सघुष्य, मिथ कलह जनयितु, बगप्रदेशस्य विभाजन कर्तव्यमिति निरणयत् तदानीन्तनो राष्ट्रशासक (Viceroy) कर्जन। अस्यामुमभ्युपगममन्यथयितु महान् विरोधोऽकारि बगजनै। भारतस्यान्यप्रदेशेष्वपि तद्विरोधाय सभा अक्रियन्त। कविवरोऽपि **श्री अरविंद–चित्तरञ्जनादिभिः** सह बगभगविरोधसभासु जगर्ज। उत्तमानि राष्ट्रभावनोद्रेचकानि काव्यानि च निर्माय, स स्वय तानि मेघमेदुरेण स्वरेण सभासु गायन् विरोधवात्या समवर्धयत। "आग्लशासकाना सहायकैर्न भाव्यम्। अहिंसाव्रतैश्चास्माभि शासनस्य दुर्वृत्तानि प्रतिकर्तव्यानि" इति चोपादिशत्। किन्तु उग्रस्वभावाना बगयूना हिंसापक्षपातो नास्मै रोचते स्म। अत रवीन्द्रनाथो न धैर्यधनोऽस्मन्नेतति ते तमनिन्दन्। रवीन्द्रस्तु लोकरञ्जनायैव विवेकशून्यमुत्तेजक वचन न रोचयते स्म। कल्पनाविभववान् कविवर सो "नाह महात्मा गाधिरिव लोकनेतृत्वदक्ष" इत्यपि सम्यगबुध्यत्। अत. पुन स वाङ्मयसेवापरो विग्रहविमुखश्चाभवत्। तथापि तद्रचितान्यनुपमानि राष्ट्रभावनाद्योतकानि काव्यानि प्रतिसभ प्रतिरथ्य च गुञ्जन्ति स्म। तेषु दिनेषु महात्मना गाधिना 'राष्ट्रीयवस्तूपयोगो हि स्वाराज्योपाय' इति

घोषितम्। घोषणामिमामुपजीव्य स्वभावनम्रा युवानो गृहाणि आपणानि च प्रविश्य, विदेशवस्तूनि, विशेषतो वस्त्राणि राशीकृत्याग्निसादकुर्वन्। प्रवृत्तिरपि मौढ्यप्रसूतेति ख्यापयन् कविवरस्तामनिन्दत्। स हि स्वदेशोत्पन्नानां वस्तूनामुपयोगमभ्यर्हणीयं मन्यमानोऽपि पूर्वमेव क्रीतानां परायत्तानां वैदेशिकवस्तूनां वस्त्रनाशं न युक्तरूपममन्यत। विषयमिमं साधु प्रकाशयितुं स 'घरे बाहिरे' इति नाम्ना रम्यमुपन्यासं व्यरचयत्। किन्तु हन्त! लोकचेतोऽनुवृत्तिमननुकुर्वतोऽस्य निन्दापरा बभूवुर्जनाः। तथापि स निर्भीकं स्वमतं स्थापयन्नेवासीत्। केनापि निमित्तेन युवसु विनाशकारिता-ऽनुशासनहीनता च नेष्टेति स दृढममन्यत। दीर्घदृष्टेरस्यैव मतं कीदृग्घित-बुद्धिप्रसूतमासीदिति नूनमद्य दीप इव सर्वेषां न प्रत्यक्षम्। कविवरोऽयं राष्ट्रसेवायां न कस्मादप्यून इति तु तेन जलियानवालावाग इत्यत्रात्यन्तं कृतानत्याचारानवगम्य तूर्णमेवाङ्गलशासनदत्तं 'सर' इत्युपाधिं परित्यक्तं इति घटना साधु प्रमाणयति।

तेषु दिनेषु रवीन्द्रठाकुरेण सह बन्धुभावं प्रपन्न आसीदाङ्गलश्रेष्ठः सी० एफ्० एण्ड्रूज। अयं महाशयः पूर्वं ठाकुरेण मैत्रीमनुभूय तेनैव प्रेरितः दक्षिणाफ्रिका-देशे भारतीयानामधिकाररक्षायां अविरतं प्रयतमानं गान्धिमहाशयं जगाम। तेन च आजीवनं सख्यं प्राप्तो राष्ट्रियस्वातन्त्र्ययुद्धसैनिकोत्तमो भूत्वा कारागार-मप्यसेवत।

रवीन्द्रनाथठाकुरमहाशयेन शतशो विविधाकाराणि काव्यानि, नाटकानि, निबन्धाः, उपन्यासाश्च विरचिताः। तेषु सर्वत्र तस्य नवनवा दृष्ट्युन्मेषाः सलक्ष्यन्ते। तत्रापि 'गोरा' नाम्नि बृहदाकारे उपन्यासे तेन धर्मजातिगता जन्मप्राप्ताः संस्काराः कथङ्कारं जनस्य विवेकं व्यामुह्य गर्हितमिव धर्मस्येतो-पस्थापयन्तीति कथानायकस्य वृत्तेन साधु ख्यापितम्। एतदुपन्यासव्याजेन च भारतीयनारीरत्नं कीदृशमुदारहृदयं मातृभावमिश्रञ्च भवत्युदारकर्माऽपि भवतीत्येतदप्यानुषङ्गिकतया समुद्घोषितम्।

क्रान्तदर्शी ठाकुर सत्य भारतीयजीवनदृष्टेरनुपमो द्रष्टा भक्तप्रचावर्तन । कालक्रमेण मानवस्वभावस्य नैसर्गिकी सकुचितता भारतीयामुदारा दृष्टि व्यालुम्पतीति स सम्यगवाधारयत्। वेदेषु गीतादिषु च ग्रथरत्नेषु प्रकाशमाना विशालदृष्टि सुदीर्घदास्येन कुण्ठिता सती विकृति विवर्णभाव च धृतवती। परतु न वय तत्तथात्वेन जानीम । तद्धि खलु महत् शोकस्यास्पद भवति। कविवरोऽय भारत वर्ष समेषा विश्ववासिना नीडायमान प्रतिपादयति बहुतानुपमासु रचनासु। "अनादे कालादत्र जगत सर्वाभ्यो दिग्भ्यो विविधा प्रजा – शका हूणा आर्या अनार्या चीनीया मुगलाश्च समागता । पयोनिधौ नद्य इव च ता विलय समरसता समभावञ्च प्राप्ता । भारतीयेभ्यस्तैर्बहु ग्रहीत प्रभूतञ्च दत्तम्। अद्य पुनराङ्ग्ला समागता । यदि प्राचीना सस्कारसमृद्धि साधु परिपाल्य तैर्दत्तानपि दृष्टिविशेषान् सत्कुर्म, तन् नून नो लाभायैव कल्पेत। आत्मनिरीक्षणेन चेद् वयमात्मगत तत्त्वामलम्, सुदीर्घकालाच्चाप्तस्य दास्यस्य हेतूश्चावगच्छेम, अवश्य यद्रक्षणार्हं तत्परिरक्ष्य, कालप्रवाहेणानीतस्य सकीर्णताबद्धविचारकर्दमस्य चापसारणे प्रवृत्ता स्याम"। एवमादि न्यरूपयत् प्रज्ञावता वरेण्य ठाकुर ।

## महापारितोषिकलाभः (Nobel Prize)

स्वेडनदेशीयेन विद्यारसिकेन नोबलाख्यनरोत्तमेन महार्घं पारितोषिक कल्पितमास्ते । कविवरोऽसौ मातृभाषाणामभिवृद्धिस्तद्द्वारा शिक्षावितरण च सर्वथा हितकरमिति दृढमतिरासीत्। बालेभ्यो विदेशभाषया पाठन नामाविदिततत्त्वस्य विषयस्य बलात् कोमलमतिष्वारोपण भवति। नूनमेतदध्ययनविषयस्य नीरसतामादधाति अज्ञातभाषामुखेन पाठनम्। विषयेऽस्मिन् स महात्मा गाधिश्चेति द्वावपि पुरुषश्रेष्ठावैकमत्यमभजताम्। भारतीयबालाना शिक्षामाध्यम विदेशभाषेति तयोर्मतानुसार विषयग्रहणशक्ति दृढमवरुणद्धि। कविवरोऽय बगभाषयैव स्वकाव्यमौक्तिकानि जग्रथ। स्वजनवियोगात् सतापभूयिष्ठेषु तेषु दिनेषु तेन १५७ गीतरत्नानि निर्मितानि।

तदनु आङ्गलदेशं गतेन च तेन तेभ्यः ५१ गीतानामाङ्गलभाषया स्वयमनुवादः कृतः। अनुवादरूपाण्यपीमानि काव्यानि तथा भावललितानि हृदयहारीणि चासन् यत्तानि निर्निमेषं भावयन्तस्तत्रत्याः सहृदया मुक्तकण्ठं सशिरःकम्पं च प्राशंसन्। 'गीताञ्जलि' नाम्ना सञ्चितायाः विश्वविश्रुताया अस्याः काव्यमणिमालाया युरोपदेशेषु प्रथने सहायक आसीत् चित्रकारश्रेष्ठः श्री **विलियम रोथेन्स्टेन**। अथ खलु तत्काव्यगुणगृहीतं सज्जनं १९१० खिस्ताब्दे भारतमागतो रवीन्द्रनाथसख्यं प्रापत्। स्वकृतिविषये मन्दादरो लज्जाशीलश्च रवीन्द्रो न तस्याः स्वकृतेः महापारितोषिकाय (Nobel Prize) योग्यतामकल्पयत्। सकलमहाकविलोभनीयस्य तस्य पारितोषिकस्य पात्रभूतां कृतिं निर्धारयितुं नियुक्ता विशिष्टाभिज्ञा गीताञ्जलिं सोहापोहं परीक्ष्य, रवीन्द्रनाथाय तद्विश्वविख्यातं स्वेडनराष्ट्रेण कल्पितं पारितोषिकं दातव्यमिति निरणयन्। पारितोषिकमिदं 'एशिया' वासिना नैकेनापि कविवरेण लब्धपूर्वमिति तल्लाभेन रवीन्द्रस्य कीर्तिः सर्वासु दिक्षु विद्युद्वेगेन प्रासरत्। निखिला भारतीयाश्च गर्वोन्मुखा अभूवन्।

अथापि रवीन्द्रो न तेन यशोविभवेन प्रहर्षितोऽभवत्–"प्रत्यहमहं ज्ञाताज्ञातसहृदयेभ्यः सहस्रशोऽभिनन्दनपत्राणि तन्त्रीश्च लभे। तेन चोपरुध्यत इव मे हृदयम्। तथापि आनन्दातिरेकेण सभाजितोऽपि मिथ्याख्यात्याऽनया क्षुब्धचेताः श्रान्तिमेवानुभवामि। सर्वमिदमत्युक्तिरूपमिति भावयतो मे क्लिश्यति मनः। नूनं सम्मानेनैव वैदेशिकैः कृतं इति कृत्वैव ते तां सम्मानयन्ति न मामिति च दृढमवैमि।" इत्यभणत्।

## शान्तिनिकेतनम्

पित्रा देवेन्द्रेण कलिकातातो पञ्चाशद्योजनैर्दूरवर्ती विस्तृतो रमणीयश्च भूभागो ध्यानादिसाधनयोग्य इति क्रीत आसीत्। तत्र च वासयोग्यं हर्म्यमपि तेन निरमीयत। तत्र रवीन्द्रेण पूर्वं ग्रामीणानामुपकाराय संस्कारकेन्द्रम् इति शालैवाऽस्थाप्यत। रवीन्द्रस्य दिगन्तव्यापिना यशसा आकृष्टा नैके भारतीया

वैदेशिकाश्च त शिष्यभावेनोपासरन्। तेषा निवासाय भारतीयविद्याकलानां च सम्यगुपासनाय स 'शान्तिनिकेतने'ति नाम विद्यापीठमकल्पयत्। वृक्ष लताभि सकुल उद्यानप्राये चास्मिन् विद्यानिकेतने, पुष्पपुञ्जे भ्रमरा इव परित शतशो विद्यार्थिन शान्तिसेविनश्च समागच्छन्। अस्य प्रतिदिन विस्तरस्स्वरूप गच्छता कालेन विश्वविद्यालयरूपमधत्त। नोवलपारितोषिक-रूपेण लब्ध सपादलक्षरूप्यकात्मक धनञ्च कविवरेण पूर्वं प्रतिष्ठापितस्य सस्कारकेन्द्रस्य विकासार्थमकल्प्यत। तथापि प्रतिदिन पीनता गच्छन् शान्तिनिकेतनस्य व्ययभार दुरूह कलयन् कविवर अमेरिकादिपाश्चात्य-देशान् गत्वा व्याख्यानादिमिषेण वित्त प्राप्तुमियेष। तदा बह्वीभि सस्था-भिरजनैकशो निमन्त्रितोऽयमिदप्रथमतया 'अमेरिकादेश' जगाम। किन्तु सकल्पानुरूप धनमलभमान पूर्वं किञ्चिदखिद्यत्। अथापि विद्याकलार्थिना विनाऽपि धन कार्यकलापो नावरोधमर्हतीति परिभाव्य निर्वृत्ति लेभे। अमेरिकात प्रतिनिवर्तमानोऽयमन्यानपि युरोपखडदेशान्जगाम। आङ्गलदेशे विशिष्टान् बर्नाड शो–बर्नाडरसेलप्रभृतीश्च प्रतिभाजुष सारस्वतान् मिलित्वाऽनन्दत्। तथैव फ्रासदेशे प्रथितप्रज्ञ 'रोमोरोलो'नाम्ना ख्यात भारतीयसस्कृतिप्रशसकम-मिलत्। वारद्वय जापानदेश गतस्यास्य तद्देशीयाना राष्ट्रभक्त्युद्यमशीलता सौन्दर्यरतिञ्च विभाव्य महान् परितोषोऽजायत। जापानदेशीयाणामपि प्रतिभाजुषि कविवरेऽस्मिन् महानादर आत्मीयता, प्रीतिश्चाभवत्।

शुक्लपक्षशशिवद् विवर्धमान शान्तिनिकेतन परिभाव्य स भृशमनन्दत्। किन्तु तद्व्ययभारोद्वहनचिन्ताऽपि प्रतिदिन पिशाचीव तमुपाद्रवत्। तदर्थं धनार्जनं, स्वीयनाटकाना जनताया पुरोऽभिनय च लक्ष्यीकृत्य, स शिष्यगण-समाथो भारतीयप्रदेशानुपजगाम। नाट्याभिनयेन च स जनाना चेत प्रसादेन सह धनमपि समचिनोत्। बहूना रूपकाणामभिनयादिशिक्षा वितन्वन् स स्वयमप्यभिनयकार्यमन्वतिष्ठत्।

एकदा रवीन्द्र स्वशिष्यगणेन सहाभिनयाय स्वनाट्याना देहली गतवान्। महात्मा गाधिरपि तदा तत्र स्थितोऽभवत्। धनार्जनाय कविवरोऽस्वस्थ-

शरीरोऽप्येव क्लिष्टमानिति विदित्वा खिन्नमना गान्धिस्तस्मै पश्चिमहस्तान्नकं धन विनीय, मा भूत्नाटकायोजनक्लेशो भवत" इति प्रार्थयत्। महात्मनस्य सुहृद्भावमात्मक्षेमचिन्ता च परिभाव्य, गद्गदकण्ठ आसीत् कृतज्ञ कविश्रेष्ठ। तदानीन्च म नाट्याभिनय तत्याज। किन्तु हन्त! न केवल धनसंचय एवासीत् प्रयोजन कविवरस्य नाट्यप्रवर्तने। स हि स्वभावादेव नाट्यदर्शनाभिनयाभ्या निर्वृतिमविन्दत। तत्र हि स्वचेतन्तर्पणमप्यासीत् प्रयोजनान्तर तस्य। अत कालान्तरे पुन सोऽभिनयसूत्रधारतामारभत।

## गांधिसख्यम्

महात्मन कविवरस्य च परम सौहार्दमासीत्। बहुत्र विषयेषु मतभेदमावहन्तावपि तौ परस्परस्य साधुता सौहार्दं राष्ट्रप्रीतिञ्चाविदताम्। कविवरो भावनाप्रवणोऽपि विचारधन एवासीत्। गान्धिस्तु परमेश्वरपरायण कर्मपतनि स्पृहयाभूत्। विहारप्रदेशे भूकम्पकृता महाहानि श्रुत्वा गान्धिरभाषत -"अन्त्यजेषु सवर्णकृतैरसदाचारै प्रकुपितेन जगन्नियन्त्रा खलु प्रकटित कोपमिममवैमि"। महात्मनोऽभ्युपगमेनानेन क्लिष्ट कविवर उक्तवान्- "प्राकृतिकीषु घटनासु मानवाचारहेतुकल्पना नून विकृतमानसस्य विजृम्भणमिति मन्ये"। तथैव वैदेशिकवस्तुत्यागविषयेऽप्यनयोर्वैमत्य कटुपत्राणा विनिमयकारण बभूव। अथापि न तयो परस्परस्नेहा न्यायबोधजन्य प्रेमाऽविरत बभूव। एतदेव तयोरौनत्य प्रमाणयति। धृतानगरे गान्धिनामरणाऽनशन आरब्धे कविवरोऽपि विना विलम्ब सचिन्तस्त दुद्राव।

सुदीर्घपरिश्रमेण नैकाभि स्वजनवियोगप्रभूताभिर्मन सन्तापिनीभिर्घटनाभिर्वयोभागेन च कविवरस्य देह शनै रोगगृहमिवाभवत्। भैषज्यानुकूल्याय कदाचनानारमागतस्यापि तस्य न पुन स्वास्थ्यलाभोऽभवत्। एकदा तु मूर्छामवाप्तो दिनद्वयमविदितबाह्य एवात्यवाहयत्। मृत्योर्गृह गत्वा निवृत्त इव च स मृत्युतत्त्व पर्यालोचयन् कवयाबभूव। स्वस्य सुदीर्घे जीवने किमनुभूतम्? "धनयश -कामनाक्लिष्टो मनुष्य स्वपादतलाद्-

वालुकामयी भूमि प्रतिक्षणमपसरन्ती न वेत्ति। नैकशोऽह मृत्योर्भयानक रूप पश्यन्नपि तत्पार्श्वस्थिता निरवधिका शान्ति, अप्रमेया निर्वृतिञ्च विभावयामि।" इत्यादि।

पाश्चात्यदेशीयैर्वैज्ञानिकै साधित प्रकर्ष कविगुरु प्रशशस। तेषा सामाजिकीमुन्नति समताञ्च सविस्मय विभावयामास। किन्तु द्वितीयविश्व-युद्धस्य भयावह रुपमुत्पश्यन् पाश्चात्यसस्कृतेर्दाम्भिक करालञ्च रूप विभाव्य स सार्तनादमवोचत् –

"शान्तिशत्रूणा भवता भौतिकी समृद्धिर्न विश्वस्य हिताय भवति। उटजेषु लताकुञ्जसमावृतेष्वाश्रमेषु च लब्धप्राणा विश्वबान्धवभावा च भारतीया सस्कृतिरेव विश्वस्य आशास्थान वर्तते। अद्य जीवनसध्याया वर्तमानस्य मे चेतो भौतिक सपत्तिविलास दु खोदर्कम्, आत्मनिष्ठाया भारतीयदृष्टेश्च सुखसाधनता साधु प्रत्येति। शस्त्रास्त्रसज्जस्य मानवस्य हस्तगत जगत् स्वभवितव्यविषये मा निराश विदधाति"। इत्यादि। पुनश्चाशासपन्न इव सोऽभणत् –

"यदेय क्रूरा सहारलीला प्रकर्ष प्राप्य शाम्यति, मृत्योस्तरुण ताण्डव च विरमति, पापा दिवसा उपरता भवन्ति, स्वकृतपापाना च पश्चात्तापपरायणो भवति मनुज, क्रोधद्वेषौ रसातलमधिश्रयत, तदैव विभवविक्षिप्ताया अस्या सस्कृतेर्भस्मन. नवीनस्य मानवसमाजस्य सृष्टिर्भविता। अद्य परित श्रूयमाणोऽय शस्त्रास्त्राणा घोरो घोषस्ताद्दृश्या नवीनमानवप्रसूते पीडा प्रकाशक पटहध्वनिरिति निश्चयेनावैमि"। इति।

रवीन्द्रनाथ खलु विश्वमानव आसीत्। स हि देश-जाति-वर्णकृत विभेद भूयसाऽनिन्दत् – 'कविरह न त धर्ममातिष्ठे यत्र मन्दिराणा द्वाराणि नीचत्वेन मतस्य आवृतान्यासते। अह किन्तु सर्वेषा मनुजाना सख्याय तृपितोऽस्मि। न कस्यापि प्रतिरोधाय भित्तयो भवन्तु। मम देवता न कस्यापि कृते रुद्धद्वारा-

वर्तते। जानेर्जानि देशाद् देश च विच्छेदयनि धर्मे ममाजे च नाहमन्तर्भाव-मिच्छामि।"

उत्तरावस्थाया रवीन्द्रेण बालगीतानि रचितानि। प्रेढ्खालगेयेष्वेपु बालमुलभान् भावानभिव्यञ्जयन् स बालस्य कुतूहलपूर्णं स्वभाव दोषशून्या प्रकृतिञ्च, मर्मस्पर्शिन्या शैल्या ललितमरलैः पदैश्च साक्षादिवानुभावयति।

## निर्वाणम्

अन्तिमेषु दिनेषु स्वय लिखितुमसमर्थोऽपि स्निग्धजनेन स लघुकाव्यानि लेखयामास। स्वस्य चिरयात्रासमये स्मर्तव्या पूर्वरचिता पङ्क्ती स प्रति-जन्मदिनमगायत्। स्वस्य मरणोर्ध्वमपि तद्गान समीपस्येभ्य उपादिशदिव — **"अग्रे शान्तिसागर उत्तरङ्ग आस्ते। चालय कर्णधार! चालय ते पोतम्। चालयतस्ते स एव सहायो भविष्यति।"** इत्यादि।

कविवरोऽयमनामग्राहमेव परमेश्वरमुद्दिश्य भूयोभूयो भक्तिकाव्या-न्यरचयत्।

एव भारतीयहृदयस्य झङ्कृतिर्वीणायमान, वर्षसहस्रेष्वेव यादृशस्य प्रतिभाजुपो युगकवेर्भवत्यवतारस्तादृश स पुरुषोत्तम १९४१ ख्रिस्ताब्दस्य अगस्तमासस्य सप्तमदिने गगनमध्यमवगाहमाने भगवति भास्वति, क्षर कलेवर विहाय कीर्तिशेषतामयासीत्।

प्रजाप्रियस्य गुरुवरस्य देहत्याग श्रुत्वाऽहतचेता भारतवर्षो भूकम्पकम्पित इव बभूव। सर्वे राष्ट्रनेतार, साहित्यसेविन, संस्कृतिप्रिया जनाश्च प्रतिनगर, प्रतिग्राम, क्वचित्तु प्रतिरथ्य, शोकसभासु सम्मिलिता अश्रुधाराभिस्तस्मै निवा-पाञ्जलि वितरयामासु।

कविवरस्य प्रियसनतिरूप शान्तिनिकेतनन्तु लुप्ताश्रय मूर्छितप्राणमिवा-ऽभवत्। हन्त! भारतस्वातन्त्र्यलालस कविवर स्वातन्त्र्यसूर्योदयात् प्रागेव लोकान्तरातिथिर्बभूव।

कविवरेऽस्मिन्ननुपमां श्रद्धामावहन् भारतस्य प्रथमः प्रधानामात्यः श्री जवाहरलाल नेहरू शान्तिनिकेतनं केन्द्रशासनपालितं विधाय गुरुदेवायास्मै उचितमर्ध्यमर्पयामास। भारतेऽद्य प्रायः सर्वेषु पुरेषु, पत्तनेषु चास्य नाम्ना प्रथितं कलाभवनं, विद्यानिकेतनं, मार्गाश्चास्मिन् लोकप्रीतिं प्रथयन्ते। नूनं बहुषु वर्षशतेषु न केवलं भारतेऽपि तु समस्ते जगति नासीदेतादृशस्य विचित्रप्रतिभस्य कविवरस्य प्रसवः। कविश्रेष्ठस्यास्य रचनाचातुरी कीदृशी व्यञ्जनशीला मर्मस्पृशा चेति कथामौक्तिकेनानेन विदां कुर्वन्तु सहृदयाः –

## 'प्रश्नः'

पिता स्मशानात् प्रतिनिवृत्तः।

तदा सप्तवर्षदेशीयः, अनावृताङ्गः गले धृतरक्षाकरण्डको बालो मार्गावलोकिनि विटङ्के तिष्ठन्नासीत्।

अविभावितविचारः स मूकमतिष्ठत्। अपक्वाम्रविक्रेता रथ्याया क्रोशन्नगच्छत्। पिताऽऽगत्य सुतं क्रोडीकृतवान्। सुतोऽपृच्छत् "क्व मे माता ?"

रुद्धकण्ठः पिता नभोदत्तदृष्टिरवोचत् --"स्वर्गे"।

रात्रौ श्रान्त्या निद्रायमाणः तल्पगतो जनकः शोकसंतापेन निःसंज्ञं प्रजल्पन् विलुण्ठति स्म।

द्वारदेशो रथ्यादीपस्य मन्दप्रकाशेनादीप्यत। भित्तौ च कीटाः समचरन्।

परितो दीपशून्याः गृहाः दानवनगर्याः प्रतिहारिण इव निद्रायमाणाः अतिष्ठन्।

तदा स वस्त्रशून्यो बालः आकाशमनिमेषमालोकयत्। तस्य दिक्शून्यं मनः कमप्यपृच्छत् "कुतो नु स्वर्गस्य पन्था" ? आकाशो मूकमास्त। तारका अपि मन्दतरप्रकाशा बभूवुः। ते खलु तिमिरखडमिषेणाश्रूनवर्षन्।

× × ×

कविवरस्येश्वरप्रार्थना कीदृशी हृदयङ्गमेति निम्नगत भावानुवादात्मकं काव्य स्पष्टयति.–

प्रभो ! तवाहं, निखिलं त्वदीयं, तोयं फल पुष्पमयो धनादि,
अतः प्रदातुं नहि मामकीनं, वस्त्वस्ति किञ्चिद् यदहं ददे ते ।
किन्त्वस्ति पापं बहु सञ्चितं मे, यद्भारभुग्नं हृदयं मदीयम्,
गृह्णासि तच्चेद् भगवन् ! भवेयं निवृत्तभारो न हि भारवांस्त्वम् ॥

गुरुवरेण एतादृशानि सहस्रशो विरचितानि काव्यरत्नानि वर्तन्ते, यानि पठन्त· सचेतसो मृद्वीकारमर्मपि न बहु मन्यन्ते ।

कविकुलगुरुणा रवीन्द्रनाथेन स्वस्य नैकविधाना रचनाना गुणौघेन नून भारतस्य यश सर्वास्वपि दिक्षु विस्तारितमिति भारतीयजनता तस्मै पृथुल-मृण धारयति । सहस्राणि च वर्षाणि सा यशोधन त कृतज्ञभावेन स्मरिष्यति ।





# स्वामी विवेकानन्दः

रामकृष्णमहाशिष्यः सर्वविद्याविचक्षणः ।
आर्यतत्त्वस्य लोकेषु प्रदेष्टा वाग्मिनां वरः ॥
विवेकानंदनामायं लोकसेवाप्रवर्तकः ।
वेदान्तजयघोषं यो चकार योगविद्वरः ॥

भारते विशिष्य च पूर्वभारते, तदा आङ्ग्लाना शासनमिव भाषासंस्काराश्च दृढा प्रतिष्ठामापु । वंगप्रदेशे तत्रापि तन्नगरेषु आङ्ग्लभाषाया प्रचारो विसृमर आसीत्। आङ्ग्लाना सामाजिकी स्वतन्त्रता, राजकीयमभ्युदय, साहित्यिकमुन्मेष, क्रान्तिपूर्णान् विचाराश्च दर्शंदर्शं नवशिक्षादीक्षिता हिन्दव स्वधर्मे, स्वीयसामाजिकव्यवस्थायान्च शिथिलादरा अभूवन्। शिक्षितजनमनश्च स्वीयसंस्कृतौ घृणाकीर्णमभवत्। येन विविधरूढि विभ्रमसंशयप्रस्तात् हिंदूधर्मादुद्विग्ना येचन ब्राह्मसमाजनामान पन्थान समाश्रयन्।

परायणा सौशील्यमूर्तिश्चावर्त्तत। एकदा शालात आगम्य नरेन्द्रो शालायां मनोचित्येनात्मानमधिक्षिप्त मातर न्यवेदयत्। वत्सस्य चिबुक हस्तकृत्य सस्नेह मातोत्तरितवती –"वत्स ! न कदापि कदाचार भजस्व। सत्ये पथि वर्तमानस्य तव न लोकापवादाद् भयाद्वासन्मार्गावलबनमस्तु।" "सत्यमेव जयते नानृतम्"–इति। एतदेव स्मरन् नरेन्द्रोऽग्रेऽभापत –"यत्किमपि साधुवृत्त मयि वर्तते मातुरेव सोऽनुग्रह ", इति।

सप्तमे वर्षे माध्यमिकशाला प्रविष्टस्य नरेन्द्रस्यासाधारणी प्रज्ञा, छात्रान्तरेभ्यश्च मतिमत्त्वातिशय पश्यन्तो गुरव सुतरा प्रसन्ना अभूवन्। तत्पितरौ चाभिनन्दयामासु। तत्र विद्याग्रहणेन सह रूपकाद्यभिनययोजनेऽपि स परम सामर्थ्यं प्रादर्शयत्। प्राणिसग्रहालये वस्तुसग्रहालयेषु च सतीर्थ्यै सह तदा तदा गत्वा स ज्ञानराशे सचयशीलो बभूव। सगीते, पाककलायां, जलतरणे, क्रीडासु च सखीनामग्रणीरभवत्।

न त कदापि भीति सशयालुता वाऽस्पृशताम्। आरामगतान् वृक्षानारूह्य कपिचेष्टने स महती प्रीतिमवाप। एकदाऽऽरामपालेन 'अत्र किल पिशाचो वसति। समीपागताना ग्रीवाभग च करोती'ति सावष्टम्भ भायिता पलायिता सर्वे बाला। कालान्तरेण च ते तत्रागत्य सहास खेलन्त नरेन्द्र दृष्ट्वा विस्मिता। नरेन्द्रस्तान् भर्त्सयन् बभाण –' मूढा ! पश्यत मेऽक्षता ग्रीवाम्। स हि वराको वृद्धो वृथैव पिशाचादिकथा वदति। अनुभवमन्तरा नैव कस्यापि वच सु विश्वसितव्यम्,' इति। पित्रा प्रेरित स कौमार एव प्रसिद्धान् विदुषोऽमिनत्। विविधविषयेषु च जिज्ञासामशमयत्। माध्यमिकशालान्ताया परीक्षाया यशस्वी षोडशहायनस्तारुण्यतरलो नरेन्द्रो महाशाला प्रविवेश। एकवर्ष च तत्राधीत्य–'स्कोटीशमिशन'चालित महाविद्यालय जगाम। तत्रैव तत्प्रधानाचार्याद् हस्तीनामकात्स इदप्रथमतया परमहस-रामकृष्णस्य पुण्य नामाश्रृणात्। नरेन्द्रस्य विद्याविचक्षणता वर्णयन् श्रीहस्ती अभापत –"नरेन्द्रो नाम प्रतिभापुञ्ज । नैकान् देशान् भ्रमतापि न हि मया

क्वापि दृष्ट एतादृशो विचक्षणो मेधावी। नूनमेष विद्यावत्सु दिगन्तकीर्त्तिर्भ-विष्यति," इति।

विद्यायशसैव नातृप्यद् नरेन्द्र। तस्यान्तःकरण परमतत्त्वस्य साक्षात्कारायाविरतमुत्सुकतामभजत्। नवीनशिक्षादीक्षितत्वात् स पूर्वं ब्राह्मसमाजश्रेष्ठानुपागच्छत्। एकदा स समाजाग्रणी देवेन्द्रनाथ–ठाकुरमुपसृत्यापृच्छत्–"आर्य! किन्नु दृष्टो भवता परमेश्वर"? यूनस्तस्यापूर्वं त प्रश्न निशम्य, विस्मयाविष्टो देवेन्द्रनाथोऽभाषत –"वत्स! नून चक्षुषी ते त्वां योगाभ्यासपटु ख्यापयत। अतो योगाभ्यासनिरतो भव।" श्रुत्वैतन्न तुतोष नरेन्द्र। "नाहमेतेनोपकृत स्याम्। न हि मे जिज्ञासाऽत्र निर्वपेत्," इत्येव परिभाव्य, विषण्णमना निरुद्देश विक्षोभभूयिष्ठ च कालमनयत्।

अथैकदा रामकृष्णशिष्योत्तम रामचन्द्रदत्तममिलन् नरेन्द्र। स हि विक्षुब्धस्य नरेन्द्रस्य भास्वर प्रज्ञापूर्णञ्च स्वरूप दृष्टवाऽहृष्यत्। रामकृष्ण चोत्तमगुरुमख्यापयत्।

तत एकदा भगवान् रामकृष्णो भक्तवरस्य सुरेन्द्रनाथमित्रस्य गृह गत आसीत्। नरेन्द्रोऽपि विधिवशात् तत्र सप्राप्त। सुरेन्द्रप्रचोदितश्च स मधुरेण भावभरितेन च स्वरेण भक्तिगीतमगायत्। तच्छ्रुत्वैव पिपासार्दितो पानीयपानेनेव परमा तृप्तिमभजत् परमहस। तरुण च नरेन्द्र स्व दक्षिणेश्वरे द्रष्टु सस्नेह निमन्त्रयामास। नरेन्द्रोऽपि श्रुतपूर्वपरमहसकीर्ति, वस्तुतोऽय परमेश्वरद्रष्टा न वेति जिज्ञासया त गन्तुमनुमेने।

निरक्षरस्यापि, वाग्विभवशून्यस्यापि, तदातदा मत्तोन्मत्तवदाचरतोऽपि, रामकृष्णस्य देवीसाक्षात्कर्तेति, परमहस इति च विसृमर यश आसीत्। प्रज्ञावता श्रेष्ठा प्रतिष्ठिता विद्वासोऽपि तस्य बालसहजेन स्मितेन, उपनिषत्कल्पेन च वचोविन्यासेन नतमस्तका विगलितसशयाश्चाभवन्। नगराद् बहि दक्षिणेश्वराख्ये कालिमन्दिरे स न्यवसत्। काल्या सह स मनुष्येणेव समतयते स्म। पूर्वं देव्येकाराधननिरतोऽपि स तत्साक्षात्कारात्पर परमे-

श्वरस्य सर्वरूपाणि, सकलसप्रदायप्राप्याणीश्वररूपाणि च विविधसाधनानि साक्षादकरोत्। एकमेव तत्त्व विवाधाकार विलसतीति तस्यासीद् दृढ मतम्। स हि समागतान् जिज्ञासून् दिव्यानदेनापूरयत्। नास्तिकाश्च परमात्मप्रवणान् चकार। विस्तृत आसीत्तस्यानुयायिना गण। किन्तु नैतावता तस्य मनो ऽतृप्यत्। स हि तादृश कचन शिष्योत्तममाचकाक्ष य सर्वत्र देशे, देशान्तरेषु च दिव्यभाव प्रबोधयेत्, लोकानामाध्यात्मिकी पिपासाञ्चोपशमयेत्। तादृशश्च समागत शिष्यमणिस्तमकस्मात्।

दक्षिणेश्वर समागते नरेन्द्रे, दृष्टमात्र एव च तस्मिन्, परमहस त भवान्तरसुहृदमिव, जनकल्याणायावतीर्ण सिद्धमिव, स्वस्य तपसो मूर्त फलमिव, सविग्रहमध्यात्म विद्याराशिमिवामन्यत। आकारे वेषे वाग्व्यापारे च युवान्तराद् विलक्षण नरेन्द्र चक्षुर्भ्यां पिबन्निव क्षण तूष्णीमतिष्ठत् परमहस। ततश्च त भक्तिगीतानि श्रावयितु निवेदयामास। नरेन्द्रो हि गीतैकनिविष्टात्मा हृदयहारि परमेश्वरैकदर्शनलालसस्यात्मन आर्तिस्रोतोरूपमिव भजनमगायत्। तच्छृण्वतो रामकृष्णस्य हि सर्वाणीन्द्रियाणि, श्रवणैकगतान्यभवन्। शृण्वन्नेव च स अश्रुधारा अमुञ्चत्। कम्पमानगात्रश्चात्मानमेव व्यस्मरत्। विरते च गीते, स्नेहस्निग्धेन चक्षुषा नरेन्द्र पश्यन् सगद्गदमभणत् —"अहो! कथमु त्वयाऽऽगमने विलम्बितम्! एव सुदीर्घं प्रतीक्षमाणस्यापि मे उपेक्षा नून तेऽकरुणता निवेदयति। लोकाना ससारकथा शृण्वतो मे कर्णौ क्लिश्नीत। आत्मन पीडामनुरूपाय निवेदयितु सतापमुपशमयितु च, कियता कालेन मया व्याकुलितम्! हन्त! प्राप्तोऽसि'। ततश्च किञ्चिद् विरम्य पुनरभाषत — "भगवन्! जानेऽह त्वा पुरातनपुरुष नरसख नारायणम्। जनार्तिशमनाय च त्व भुवमवातरश्चेति साधु वेद्मि"। एव जल्पतो रामकृष्णस्य वचासि उन्मत्तपरिदेवनमिति कलयामास नरेन्द्र। ततश्च आत्मविक्षोभशान्तिलाभे स निराशो बभूव। रामकृष्णस्तु पुन पुनस्त दक्षिणेश्वरमागन्तु प्रार्थयन्नासीत्।

ह्यस कथञ्चित् सस्तम्य नरेन्द्रस्त पप्रच्छ —"महाशय! किं प्रत्यक्षीकृतो भवता परमात्मा?" विनैव विलम्ब नि सकोच च रामकृष्ण प्रत्यवदत् —

"आम्, वत्स ! अत्रैव नूनमहं त्वामिव प्रत्यक्षीकरोमि परमात्मानम्। नहि नहि, त्वदपेक्षयाऽपि तमहं स्पष्टतरं प्रत्येमि। सर्वोऽपि तं द्रष्टुमनुभवितुं भावितुं च शक्नोति। किन्तु जात ! को नु कामयते तं द्रष्टुम् ? मानवा सुतवित्तदारार्थमश्रूणि भूरि मुञ्चन्ति। को नु रोदितीश्वराय ? यदि नाम कश्चन 'तदर्थं सर्वात्मना क्रन्दति, अवश्यमेव तत्परोक्षं लभेत।" इति। रामकृष्णस्य प्रगल्भमिदं वचः श्रुत्वा स्तब्धोऽभवन्नरेन्द्रः। अद्य खलु स साक्षात्कृतपरमात्मानं पुरुषर्षभं पश्यन्नस्ति। अद्य यावत् तेन 'ईश्वरो द्रष्टुं शक्यः' इति नैकशः श्रुतमासीद्, न 'दृश्यत' इति। रामकृष्णस्य तु वचोऽवतथ प्रतीतिपूर्णञ्चासीत्। तत्र संशयलेशोऽप्यशक्य। तदैव स सर्वं परितो वर्तमान–भित्तिं गृहं पुरुषान् सर्वमपि विलयं गच्छदिवापश्यत्। स हि मृत्योर्मुखमिव प्रविष्टमात्मानं कलयति स्म। स रामकृष्णं प्रति उच्चैराक्रोशत् –"किमिदं क्रियते भवता ? मम सन्ति मातृवधुभगिनीगृहादयः"–इति। तदैवोत्थाय स्मयन्नेव नरेन्द्रवक्षः परामृशत् परमहंसः। नरेन्द्रश्च पुनःप्रकृतिं प्राप। 'भवतु सर्वमपि यथाकालं सपत्स्यत," इति च स्मयन्नेवाभाषत रामकृष्णः। ततो नरेन्द्रोऽचिन्तयत् 'किं न्वयं रामकृष्णस्य मोहनविद्या भवेत् ? ननु वज्रकठारहृदये मयि कथं तत्सम्भाव्यते ?" रामकृष्णप्रभाववशमात्मानं विभावयन् स लज्जाहतोऽभवत्। अथापि पुनः पुनस्तं द्रष्टुमाकृष्टमना बभूव।

तृतीयवारं रामकृष्णं गतस्य नरेन्द्रस्य सैव दशाऽभवत्। उभावारामसंचरणाय गतौ। उन्मत्तदशामिव प्राप्तो गुरुः नरेन्द्रं पाणिना परामृशत्। नरेन्द्रश्च सद्य एव तत्प्रभावकुण्ठितकरणो समाधिमग्नोऽजायत। समाधिस्थितञ्च तं रामकृष्णः पूर्वमववृत्तं, जन्महेतुं कर्तव्यञ्चापृच्छदुत्तराणि च श्रुत्वा तद्विषयकं स्वाकूतमवितथं निश्चिकाय। नरेन्द्रो 'जन्मसिद्ध' इति च शिष्यान्तरेभ्योऽख्यापयत्। 'नरेन्द्रो ह्यात्मदृगाप्तकामश्च वर्तते। योगेश्वरोऽप्य योगेनैव कलेवरं त्यक्ष्यति'। एतत्सर्वं भणित्वा तत्रोपविष्टान् प्रति पूर्वानुभूतं रहस्यमेकमवर्णयत् –

"कदाचित् समाधिमग्नस्य मे मनो लोकान्तराण्य विशत्। पारे देवलोकस्यातीत्य च ग्रहनक्षत्रमार्गं, भास्वरे परावरे प्रदेशे तत् सञ्चचार। तत्राह

परमारममग्नमनस सप्तर्षीनपश्यम्। तत्र पुनस्तेजोमण्डलात् पिण्डीभूत सस्मित च जानुभ्या मन्दमन्दमुपसर्पन्त, अर्भकमेकमपश्यम्। सोऽर्भकोऽन्यत मस्यर्षे क्रोडमारुह्य, कमलकोमलाभ्या करा्भ्या तत्कन्धरा परामृशन्, कर्ण किमप्यलपत्। तत्स्पर्श-शब्दसुखेनेव सस्मित नेत्रे उन्मील्य, महर्षिस्त स्नेह-स्निग्धमालोकत। बालश्च तमभापत –"भूलोक व्रजामि, अपि भवाननु-गच्छति माम् ?" स्नेहसारेण चक्षुपा तदनुमान्य पुन स आनन्दाब्धि प्राविशत्"। एतावदुक्त्वा किञ्चिद्विश्रम्य पुनश्च प्रसन्नमना परमहसोऽभणत् –'नून नरेन्द्र त तपोधनमृषि मा च तेज पिण्डान्नि सृत बालमवगच्छ्य" इति।

एव पूर्वपरिचितस्यैव परमतत्त्वस्य भूमिगत रूपमेव नरेन्द्र इत्याकलयत् परमहस। अत तस्मिन् दृष्टमात्र एव परममोदमविन्दत। रामकृष्णो ब्रह्मनिष्ठ सन्नपि नवीनजगतोऽभिलपितानि न वेद। नरेन्द्रस्तु नवीनशिक्षा-दीक्षितो युगानुरूप प्रवचनपटुश्चेति तयोर्योगो जगच्छ्रेयोविधातु पूर्व-सकल्पसिद्धिरिवाभवत्। रामकृष्णो ब्रह्मिष्ठोऽपि न श्रोत्रिय। अत श्रोत्रिय-शिष्यलाभेन स्वीय साध्य सम्पन्नमितिविचार्य जहर्ष।

रामकृष्ण केशवचन्द्रसेन–प्रभृतीना ब्राह्म-महापडितानामुपस्थितौ भूयो भूयो भूरि प्रशसति स्म नरेन्द्रम्। एकदा सोऽवदत् –"केशवापेक्षया गुणैर धिकतर विराजते नरेन्द्र। केशवो दीपोपम, नरेन्द्रस्तु नन भास्वत्कल्प। "(केशवचन्द्रस्तदानीतनो ब्राह्मसमाजनेता मतिमता च वरेण्य इति सुविख्यात आसीत्) किन्तु तादृश गुरुवचो नारोचत नरेन्द्राय। स हि तदर्थमुपालभत गुरुम्। गुरुस्तु त विहसन्नेवाभणत् –"किमह कुर्याम् ? न जानामि कथमेतत् स्वयमेव स्फुरति।" इति।

तदातदा नरेन्द्रो रामकृष्णस्य दिव्योन्मादमनिन्दत् –"एतत् खलून्मादस्यैव प्रकारो नात्मज्ञानस्य। बहुधा जनश्चिरसग्रहीतैर्मनोव्यापारैरेव प्रतार्यते। मनोविकार एवाय न दिव्यसाक्षात्कार" एवमादीनि सशयवचासि श्रुत्वा, निराशा प्राप्तो रामकृष्णो जगज्जननी कालिमातरमपृच्छत् –"मात! किमु सत्यमेतद् यद् नरेन्द्रो भणति ? किं तद्विषयको मे विश्वासो वितथा

अतिदु खर्कर्षितो नरेन्द्रस्तदा तदा मित्राणा पुरो नास्तिकमतानि सयुक्ति समार्थयत्। तान्येव मित्राणि वृत्तमिद गुरवे न्यवेदयनन्निन्दश्च नरेन्द्रस्य दुराचारान्। किन्तु हन्त! गुरु नरेन्द्रनिन्दा नैवासहत। स ह्यगर्जत्- "कथम् वराका यूय जानीथ पुरुषपुगवस्य तस्य चरित्रम्?" इति। अशान्त मन शमयितु नरेन्द्रस्तदा तदा गुरुचरणान्युपासर्पत्। प्रीतिपूर्णानि च तद्वचोऽमृतान्यापीयात्मान कृतार्थं मेने।

एकदा कार्यलाभाय समग्र दिनमटाट्य, क्षुधित श्रान्तश्च नरेन्द्र आपणिकस्य सोपानवेदिकायामुपविष्ट। सहसैव तस्य चेतोऽनिर्वचनीयेन प्रकाशेन पूरित सत् सर्वं विस्मृत्य दिव्यभावनिमग्नमभवत्। तथैव रात्रि मतिवाह्य च ब्राह्मे मुहूर्ते जागरितेन्द्रिय स दु खमीश्वरस्यानुग्रह, ससार च बन्धनरज्जुममन्यत। तदनचिरादेव अल्पवेतन किञ्चित्कार्यमलभत। येन तस्य कुटुब जीवनपर्याप्त भोजनमलभत।

## कालिभक्तियाचना

अर्थक्लेशमुपशमयितु कृतमना नरेन्द्र एकदा गुरु जगदबया जीविकापर्याप्त धन दापयितु स्व चिन्तासन्तानान्मोचयितु च व्यजिज्ञपत्। गुरुश्च स्मयन्नेवाभणत् "कथ नु त्व स्वयमेव मातर न याचसे? जानेऽह तस्या त्वयि वात्सल्यम्। अवश्य पूरयिष्यति सा ते मनोरथान्"। एवमायुक्त्वाऽद्यैव रात्रौ गत्वा मातर ते काम निवेदयेति प्रोक्त शिष्यवत्सलेन गुरुणा। नरेन्द्रस्तथा कर्तुमन्वजानात्। अथ मदिरान्तर्विशोभमान मातुर्विग्रहमुपगच्छन् नरेन्द्र परमा प्रीति प्राप। नूनमद्य जगज्जननी मा भाषिष्यते निवर्तयिष्यति च मे पारिवारिक दु खमिति प्रहर्षप्रफुल्लमासीत् तन्मन। अन्त प्रविश्य साञ्जलि ध्यायश्च स ता सकलविश्वस्य सर्गस्थितिसहारकारिणी मङ्गलमयीऽम्बाभावयत्। प्रार्थयच्च-'मात, देहि मे स्थिरा भक्ति ससारसगाच्च विरतिम्"। तदेव दत्त प्रतिगृह्य च गुरु प्रत्यागत। 'कच्चिद् याचितस्त्वया मातर धनवर?" इति गुरुणा पृष्टश्च विस्फारितलोचन स्मरन्निवावोचत् -

"गुरुवर्य ! विस्मृतमेव मया तद्याचनम्। अहन्तु भक्ति ज्ञान वैराग्य च तामयाचम्"। "भवतु पुनर्गत्वा याचस्व वित्तम्"। इति गुरुणा प्रबोदितो नरेन्द्र पुनर्जगाम जगज्जननीम्। पर व्यस्मरद् वित्तम्। पूर्वयाचितमेव च पुनर्ययाचे। पुनरपि गुरुमुपसृत्य धनयाचनविस्मृतिं वैराग्यादियाचन च कृतवानित्यख्यापयत्। तृतीयवार प्रेषितोऽपि स तदेवायाचत। असकृज्ज्ञान-वैराग्याद्येव याचमान शिष्यमपूर्वप्रेम्णा पश्यन् प्रसन्नमना परमहंसो मधुर-मूर्तिमेन स्नेहगद्गदेन स्वरेणाभणत् – वत्स ! ज्ञातमेवासीन्मयैतत्। न ते प्रकृति सांसारिकेषु विषयेषु रज्यते ! ज्ञानवैराग्यादिपूर्णमेव त आन्तर करणम्। कथ तद्विषयकर्दमकलुषित स्यात् ।" इति। तद्दिने याज्ञवल्क्यजनकयोरिव कृष्णार्जुनयोरिव च नवीन एवासीत् तयोर्गुरुशिष्यभाव । नेत पर कदापि दारिद्र्यदु खेन कर्दर्थितमभूत् नरेन्द्रचेत । आध्यात्मिकायोदयाय दु खमेव भवति महाभैषजमिति च नरेन्द्रो निरणयत्।

एकदा नरेन्द्रमाश्रित्य शिष्यसघेन प्रवर्तितायां गोष्ठ्या रामकृष्णोऽभणत् – "नरेन्द्रो वस्तुतो भक्तशिरोमणि । स्नेहस्निग्ध तच्चक्षुस्त भक्तहृदयमा-वेदयति। ज्ञानिनयन नु रुक्ष भवति न भावार्द्रम्। नरेन्द्रे नैसर्गिकी भक्ति । पुष्टमप्यप्रधानमेव तत ज्ञानम् "।

स्वय दारिद्र्यदु ख भुक्तवतो नरेन्द्रस्य हृदय सदैव दीनवत्सलमवर्तत। पूर्वस्मिन् वयस्यनुभूत दु खमेव तमायत्या दरिद्रेषु नारायणदर्शिन समदु खम् अकिञ्चनसेवाव्रतिनञ्च व्यदधात्।

विग्रहपूजाया उपयोगमङ्गीकुर्वन्नपि नरेन्द्र ईश्वरस्य व्यापि विश्वरूप-मेव प्रत्यपादयत्। ईश्वररूप स एकदैव निरूपयन्नगायत् –

परेश्वरस्ते पुरतो विजृम्भते रूपाण्यनेकानि धरन्, विहाय तम्।
अन्विष्यते को हि विमूढ ! प्रेमतो भवस्य नाथ सकलेषु प्राणिषु ।।

(भावानुवाद)

कोटिशो जना अस्माद् धर्मतत्त्वमवगमिष्यन्तीति सम्प्रधार्य, नरेन्द्रम-बोधयदुदाराणि हिन्दूधर्मतत्त्वानि परमहस । विग्रहपूजाया दिव्यतत्त्वेन सह

तादात्म्यमेव फलम्। परमात्मैव सर्वप्राणिनामन्तर्यामीति च सावष्टम्भम सकृदावेदयत्।

अथैकदात्मान प्रव्रज्यायोग्यमाकलय्य प्रार्थयद् नरेन्द्रो गुरु दीक्षादानाय। गुरुरपि त विरक्तमानस निश्चित्य सहर्षं विधिवत् प्रव्रज्यामग्राहयत्। प्रव्राड्वरञ्च त विवेकानद इति अन्वर्थेन नाम्नाऽयोजयत्। (खेतडीनृपेणेद नाम पश्चात् कृतमित्यपि वदन्ति)।

## परमहस-निर्वाणम्

स्वकार्यसपादनसमर्थं विवेकानदमवाप्य विगलितकार्यवासन कृत कृत्योऽभवद् रामकृष्ण। अथ च गलव्याधिनाऽभिभूत शिष्योपदेशमात्र व्यापारेऽपि देहकष्टमन्वभवत्। भिषग्भिर्विश्रमितुमुपदिष्टोऽपि स जिज्ञासूना मन क्लेशविनोदनाय वाग्व्यापारान्नोपरराम। प्रतिदिनमुपचीयमानव्याधिश्च विवेकानद साध्यसन्नद्ध द्रष्टुमियेष। एकदा शिष्यवर स तमुपसृत्यावोचत् – त्रिचतुर्दिनव्यापिन समाधिमास्थातुमभिलषामि। अनुजानातु भगवान् मा तथाकर्तुम्" इति। रामकृष्णस्तु निशम्यैतदुन्नतभ्रूरवोचत् "मूढोऽसि त्वम् समाधेरप्युन्नता स्थितिरस्ति काचिदिति निश्चिनु। इदानीमेव त्वमगाय "ईशाच्छन्नमिद सर्वमिति'। 'शिष्या मे सर्वभूतावस्थित परमेश्वर सेवन्ताम्। न सन्तु समाधिसुखसेविन'। इत्यासीदभ्युपगम परमहसस्य। स हि नैकशोऽवोचत्–"ईश्वरशून्यस्य जगतो दर्शनमज्ञानम्। जगच्छून्यस्य चेश्वरस्य दर्शन ज्ञानम्। ईश्वरमयमेवेद जगदिति दर्शन तु विज्ञानम्। ननु भाग्यवन्त एव ते ये सर्वमिदमीश्वर इति प्रतिपद्यन्ते।" इति। विवेकानदो विज्ञानवानेव भवत्वित्यासीत्तस्य मनीषा। एकदा विवेकानदो 'मुक्तिरेव गरीयसी, तामेव च कामये' इति व्याजहार। गुरुस्तु तत्र युक्तरूप मेने। स ह्यवोचत् –'तात! किमेव वदन् न लज्जसे? त्व हि वटवृक्षायमाण शतप्तानां जनगणानां छायाप्रदो भवेरिति कलित मया। पर यदि मुक्ति

लाभेन स्वार्थसिद्धिमेव वृणीये धिक्ते मुक्तिकामम्"। एवं भणन्नश्रूण्यमुञ्चत्। एतादृशैरभ्युपायैः परमहंसो विवेकानन्दचेतसि जगच्छ्रेय कामना समधुक्षयत्।

कृतकार्यमात्मनं परिपश्य, अवधूतशिरोमणिः स सर्पस्त्वचमिव भौतिक कलेवरं तत्याज।

निर्वाणं गते प्रकाशपुञ्जे गुरुश्रेष्ठे, विवेकानन्दादयः शिष्या वज्राहता इव मूर्छितचैतन्या, किङ्कर्तव्यतामूढाश्च अभूवन्। तदा देहयात्रापर्याप्तानि साधनान्यपि नासन् मठे। कथङ्कारं गुरुमूर्तिं हृदये कृत्वा ते शिष्या ध्याना चैर्नादिभिः कालमतिवर्तयन्ति स्म। एवं वर्षद्वये व्यतीते, शिष्याग्रणीर्विवेकानन्दोऽचिन्तयत्—'नैतद्युज्यते। न विस्मर्तव्यं गुरूपदिष्टं लक्ष्यम्। तस्मात् प्रकाशपुञ्जात् प्राप्तस्य दिव्यालोकस्य ग्रामेग्रामे गृहेगृहे च प्रसार एव न कर्तव्यम्। न हि तदननुष्ठाय रामकृष्णशिष्यपदवीमर्हामि'। एवं विचार्य सतीर्थ्येभ्यश्च विज्ञाप्य, द्वित्रान् विहाय सर्वे प्रव्राजो भारतयात्रायै निर्गच्छन्त्विति निरदिशत्।

अथ तर्थेत्यनुमते सर्वे, विवेकानन्दोऽनुभावैकपाथेय उत्तरप्रदेशयात्रामारभत। सर्वत प्रथमं स भागीरथीपवित्रपादा, विश्वेश्वराधिष्ठिता, गीर्वाणविद्याविभूषिता, पुण्यपुञ्जीभूता, नैकैर्भक्तवरैर्महात्मभिश्च शुचितरा वाराणसीमयासीत्। तत्र च मंदिराणि मठाश्च साक्षात्कुर्वन्ननुपमां शान्तिमन्वभवत्। कांश्चन साक्षात्कृतधर्माणः पुरुषवरानुपसृत्य प्रसन्नो बभूव। कांश्चन धर्मध्वजिनः काषायावृतानपि रागिणः प्रतारकांश्च पश्यन्नदूयत। ततोऽन्यान्यपि कानिचित्स्थलानि गत्वा पुनर्निववृते वडानगरगतं गुरुकुलम्। तत्र पुनरपि ध्यानाध्ययनप्रवचनप्रवृत्तः कर्तव्यचिन्तापरो बभूव।

तत परं स भारतीयधर्मसंस्काराणां प्रभवं, नैकैः स्रोतोभिर्वृक्षलतापादपैश्च विराजमानं, हिमगोभितशेखरं, नैकमहापुरुषसेवितं, कविवरगीतकीर्तिं, हिमालयं पर्यटितुं प्रववृते। चेतोहरं गिरिवररामणीयकं पायपायं, साधुसंगेन च मनोमोदं वितन्वन्नलभतपूर्वां मनोनिर्वृतिम्। किन्तु श्रद्धाधनानामपि

मूढाना छद्मना द्रव्यापहरणेन तुन्दिलाना मठाधीशाना, धर्मध्वजिनाञ्च शास्त्र विदुषा भोगप्रवणताम्, आत्मविमुखाना, शास्त्रतत्त्व च विस्मृत्य शब्दाडबरे प्रवृत्ति दर्शंदर्शं सुतरामतप्यत् तस्य विवेकशालिनी मति । तत्रतत्र सचरन् स भारतीयजनताया धर्मनिष्ठा निभाल्य तुतोष । श्रद्धाधनानामपि तेषा विवेकहीनता च साक्षात्कृत्याखिद्यत् । साधारणजनस्यार्यकार्श्यमपि तस्य मर्माण्यच्छिनत् । सर्वत्र प्रगल्भ नृत्यद् दारिद्रच दृष्ट्वा भूतमात्रप्रणयिनस्तस्य तप्त मनो बहुशो भोजनादिष्वपि न प्रावर्तत । तदपसारणोपायान् विचिन्वन स्तस्य चिन्तातप्ते नयने दाहभियेव स्प्रष्टु न शशाक निद्रा । जनमनोगता धर्मविषयिणी विभ्रमपूर्णा विपरीता च बुद्धि, पाषाणद्रावकञ्च दारिद्रय मिति द्वयमविद्राव्य न भारतस्योन्नति, न च जनजीवनस्योन्मेष इति द्रढ प्रतीयाय विवेकानद ।

## यातनापूर्णा यात्राः

एकदा केनचिद् भद्रजनेन धूमशकटपत्रिका दत्त्वा विसर्जितो विवेकानद तृतीयश्रेणीखड प्रविवेश । तत्र कश्चिद् मारवाडीपरिवारो वस्तूनि विस्तार्यो पविष्ट आसीत् । सन्यासिषु घृणावान् स मारवाडी तिष्ठतेऽपि स्वामिने न स्थानमदात् । अथ कस्मिंश्चिदल्पग्रामे स्वामी मारवाडीकुटुबश्चावातरत म् । अग्निरयस्थितिगृहे छायावदल्पमेव स्थानमासीत् । तत्र वस्त्रमास्तीर्य मार वाडीपरिवार सुखेनोपविष्ट, स्वादूनि भोज्यानि च भोक्तुमारभत । दिन द्वयात् क्षुधार्दितोऽभूत्स्वामी । ग्रीष्ममध्याह्ने विरलच्छायायां च भूमौ स वृक्षस्कन्ध पृष्ठेनाश्रित्योपाविशत् । तस्य ता दयनीया विनष्टा च दशा दृष्ट्वा प्रसन्नाऽभवद् स निर्घृणो गृहस्थ ।

अथ समीपस्थाद् ग्रामाद् कन्था भोज्यात्मानि च करे कृत्वा, धावन्निवागत कश्चिन् मिष्टान्नविक्रेता । आगत एव स स्वामिनमुपधावन् बभाषे – "महात्मन्, समीपस्थितस्यास्य दासजनस्य गृहे किमित्यात्मा क्लिश्यते ? कुतो नु मन्दभाग्यस्य मे गृहे भवत पवित्रपादरजसा प्रवेश ? भगवन् ! आगम्य

तामव छायायाम्। पादरजोभिश्च पवित्रीक्रियतामिय कन्या"। इत्युक्त्वैव स्टेशनाधिपगृहन्च प्रवेश्य, स्वामिन सुखासनासीन च विधाय, शीतजलेन हस्तपादादि प्रक्षाल्य, स्वादुभोजनेन परितर्पयामास। स्वामी तु न कदापि जनमम् दृष्टमस्मरत्। स्वामिनि धनिनोऽपि मिष्टान्नकारस्य तादृशीं भक्ति परिपश्यन्नाश्चर्यमग्नोऽभवद् मारवाडी। लज्जाकशाप्रताडितश्च स्वामिनि कृतदोपमात्मान तर्जयामास। निर्वृत्तभोजन स्वामी अतर्कितागमन प्रीत्या स्नपयन्त च त यजमानमपृच्छत् —"भद्र! नाह जानामि भवन्तम्। भवस्तु मा चिरपरिचितमिव मन्यत, स्वजनादप्यधिकप्रीत्या सेवते। नात्र पश्यामि हेतुम्"। प्रसन्नमना स सज्जन स्वामिपादौ परामृश्य प्रीतिपूर्णमभाषत — "महात्मन्नद्य मध्याह्ने स्वपता मयाऽदृश्यत भगवानाञ्जनेय। स हि मा क्षुत्तापक्लिष्ट भवन्तमङ्गुल्या दर्शयन् पानीयादिना सेवितुमादिदेश। उन्मीलितलोचनश्चाह 'स हि स्वप्न' इति मिथ्या मन्वान पुन स्वापाय प्रवृत्त। पुनरपि स एव भगवान् ददृशे, आताम्रनेत्रश्च पुनरपि मा भवत्सेवायै धावितुमादिदेश। अहन्तु गतसदेह सद्य एव गृहीतसामग्रिको धावन्नेवागत्य यथादर्शित भवन्तमपश्यम्। अहो! मे भाग्यम्। अद्य भगवत कपीश्वरदर्शनस्य भाग्यमवापितोऽह भवता"। इत्युक्त्वा पुन प्रणम्य च, सबहुमान गृह निनाय विवेकानदम्। अनुभूयतत् प्रास्फुरत् स्वामिनि अवितथा श्रीकृष्णवाणी —"योगक्षेम वहाम्यम्" इति।

तेषु दिनेषु स्वामिनश्चित्तमतीव विक्षुब्धमासीत्। भारतस्य दु खेन तप्तमना स न कुत्रापि शान्ति लेभे। दम्भमूर्तिप्रष्ठान् धार्मिकजनान् कदाचारकुविचारवृत्तिनान् शिक्षितयुवान् अविचारप्रसूतरूढिग्रस्तांश्च साधारणजनान् दर्शदर्श, सर्वमिद मस्ममात् कर्तुं सघुक्षितोऽमर्ष हृदय विभेद्य, सहस्रधाराभिर्बहिर्भिन्नु प्रास्फुरत्। तादृशमन स्थितिमावहन् स भारतस्य दक्षिणा दिशमयासीत्। पर्यटश्च स बेलगोडापत्तनात् बगलोर, ततश्च मैसूरराज इष्टुमगमत्। तन्नृपस्य विचक्षण प्रधानमन्त्री स्वामिनमेवमवर्णयत् —"असौ नाम मन्याद्मनि दिव्यरूपश्च सन्यासी भारतस्यैतिहासे शाश्वत स्थान लप्स्यत" इति।

एकदा महाराजस्त 'स्वपरिजना कीदृशा' इत्यपृच्छत्। स्वामी निसकोच प्रत्यवदत् –"उदार खलु भवान्, परमन्यत्रैवात्रापि परिजना मिथ्याप्रशसया स्वामिन प्रतारयन्ति" इति। परिजनेपूपस्थितेषु कटुसत्यमिद भणन्त स्वामिन सवितर्क नृपोऽभणत् –"महात्मन्! नैव भणितव्य भृत्यजनाना पुरस्तात्! राजपरिजनो नामातिकुटिल। स हि कदाचिद् भवतेऽपि विष दद्याद्"। श्रुत्वैतत् स्वामी सहासमवोचत् –"न वय तथा देहे स्निह्याम। यथार्थ सन्यासी प्राणानपि पणीकृत्य सत्यनिष्ठा परिरक्षति"–इति। मैसूरनगरे सस्कृतविदुषा सभाया स्वामिना वेदान्तमाश्रित्य व्याख्यातम्। ततो वेदान्तस्य तत्त्वस्पर्शिनो विचारान् श्रुत्वा विद्वास परमप्रसन्ना विस्मिताश्चाभूवन्।

कथाप्रसगेन मैसूरमहीपस्य पुरो विदेशगमनेच्छा प्राकटयद् विवेकानद। तत्प्रतिभाप्रसन्नश्च भूपस्तदभिनन्द्य पर्याप्त धनमपि दातुमैच्छत्। स्वामिना तूक्तम् "प्रथममह रामेश्वर साक्षात्कर्तुमिच्छामि। तत्परमेव विदेशयात्राविषयो निश्चेष्यते। अतस्तिष्ठत्विदानी धनवार्ता"–इति। बुद्धिविभवेनाध्यात्मिकशक्त्या च सर्वान् वशीकृत्य, मैसूरात् त्रावणकोरराज्य जगाम विवेकानद। तत्र पडितै, नवशिक्षादीक्षितै, प्राध्यापकैश्च विवदमान पौर्वात्य-पाश्चात्यविषयेष्वप्रतिहतेन विद्यावैचक्षण्येन सर्वेषा मनास्यावर्जयत्। तद्विषये कश्चिदुवाच –

"आर्जव-प्रभावपूरित तन्मुख पवित्रहृदयस्य, मुक्तमनस, सत्पूताया बुद्धे, आत्मानुसधानस्य, विश्वात्मभावनाया, निष्कलङ्कचरित्रस्य च मूर्त स्वच्छमादर्शमनुकुरुते–" इति।

तदनु स गतो विवेकानदो रामनदनृप भास्करसेतुपति प्रत्यक्षीचकार। स हि सत्त्वधनो नृपस्तस्यात्मम शिष्य शीघ्रमेवाभवत्। अमेरिकादेशे 'सर्वधर्मपरिषद्' भविष्यतीति हिन्दूधर्मतत्त्वप्रस्थापनाय स्वामिनाऽवश्य गन्तव्यमित्यमन्यत स नृप। ततश्च स्वामी दक्षिणाशान्तस्थित कन्याकुमारीक्षेत्र जगाम। तत्र च प्रशान्तपरिसर सागरधौतपाद देवीमदिर पश्यन्नेवापूर्वेणो त्साहेनाभ्युत्थान् स मन्दिर प्रविवेश। साष्टाङ्ग च पारलसिन्धे कन्याकुमार्यै

प्रणनाम। दिव्यभावभरितश्च बहिरागत्योत्तरङ्गविलासिनं रत्नाकरं निभाल्य, तदन्तःस्थितं शैलमधिश्रयितुमुन्मना बभूव। महामत्स्यसेवितेऽपि सागरजले प्लवमानस्तमारुरोह। पद्मासनासीनश्च परमरमणीयां प्रकृतिं नैर्वैक्ष्यतेनात्मनाऽपिबत्। तथास्थितश्च स अचिरादेव साक्षात्कृतस्य समग्र-राष्ट्रस्य धार्मिकीं सामाजिकीमार्थिकीञ्च दुरवस्थामशोचदपृच्छच्चात्मानम् — "जयन्मिथ्येति कलयित्वा, देशस्य दीनां दशाञ्चोपेक्ष्य, आत्मदर्शनलालसस्य मम किं ध्यानासक्तिरात्मानन्दानुभूतिर्वा युज्यते? भारतस्य दुःखिनो जनान् विहाय क्वाहमीश्वरस्य वास्तवं रूपमुपलप्स्ये? नूनं तमेव परमात्मानमुपा-सितुं जन्मसहस्रग्रहणता अपि मे सुसहा। अभिजाता विद्यावन्तो ब्राह्मणा अस्पृश्यत्वेनावमानितास्तजाण्डाला वा शीलशोभिन आर्या, दुश्चरित्रदूषिता अनार्या वा सन्तु भारतीया, सर्वेऽपि ते ममेश्वराः। तेषां सेवैव मे जीवनव्रतम्। तेनैव गुरुवरस्य मे तर्पणं भवतु।।" इति।

अनायासप्रवृत्ताञ्चेमां दिव्यां वाचं स्पष्टमवाधारयत् — "धर्मभूमि-कामास्यैव भारतस्योत्कर्षः। सत्त्वशाली मायाविरहितो धर्म एव भारत-स्योद्धर्ता। धर्म एव भारतस्य पूर्वमिवाद्यापि प्राणशक्तिं समेधिष्यते। धर्म एव च भारतं राष्ट्रगणस्य नायकपदमारोपयिष्यति।" अथ स पुनरचिन्तयत् — "के वा भविष्यन्ति निष्कामा भारतसेवकाः? काषायधारिणः सेवैकव्रतिनः सन्यासिनो ग्रामाद्ग्रामं गृहाद्गृहञ्च पर्यटन्तः, दीनानां विधवानामज्ञाना-ञ्चाश्रूणि प्रमार्जयन्तः सत्यधर्मस्य पटहं नादयन्तु। अयमेव नः प्राप्तकालो धर्मः" — इति।

पुनरपि स भारतयात्रामारभत। एकदा सोऽचिन्तयत् "अकिञ्चनैर्दीय-मानमाहारमुपभुञ्जानोऽहं तानधिकबुभुक्षापीडितान् करोमि। नास्ति मे तेषामन्नेऽधिकारः"। एवं विचिन्त्य एकदा क्षुधित एव स वनं प्राविशत्। निशायां समुपस्थितायामपि वृक्षमूलमाश्रित्योपविष्टः। तदैव कश्चित् करालः शार्दूलः भक्ष्यं मृगयस्तत्रागतः। तं दृष्ट्वा स्वामी व्यचिन्तयत् — "भवतु, पश्यामि। द्वावप्यावां क्षुधातुरौ। यदि कलेबरमिदं न लोकोप-

काराय कल्पते, कल्पतां तावदस्य तृप्तये। तावताऽपीदं चरितार्थं भवतु"।
किन्तु हन्त! स्वामिन समीपमुपसृत्य सर्वप्राणिभयकरं स क्षणं विस्फारितघ्राणं किमपि चिन्तयन्निवातिष्ठत्। शान्तमूर्तेश्च तस्मान्निववृते यथागतम्।

अन्यदा अलवरनृपः शिवमङ्गलसिंहो गोष्ठीप्रसङ्गेन स्वामिनमभाषत – "नाहं विश्वसिमि मूर्तिपूजायाम्"। श्रुत्वैतत् स्वामी स्मयन्नेव समीपस्थं प्रधानं भित्तिस्थं नृपजनकचित्रं प्रदर्श्य, तदुपरि ष्ठीवनायादिशत्। तस्मिंश्च तथाऽकुर्वाणेऽन्यानादिशत्। राजा प्रधानादयश्च स्वामिनोऽतर्क्येण व्यापारेणानेन चकिता अभुवन्। 'कथमेवमुच्यते' इति चापृच्छन्। निर्भयमूर्तिः स अवोचत – 'नेदं चित्रं भवतः पिता। पत्रमात्रं हि तत्। तथापि आस्थावन्त इमे इदं चित्रमेव भवत्पितेति भावयन्तः सबहुमानं पश्यन्ति। न च तदवमानायोत्सहन्ते। एतदेव मूर्तिपूजाया अपि रहस्यम्।" इति

एकदाऽग्निरथेन गच्छता स्वामिना सह द्वावाङ्ग्लावुपविष्टावास्ताम्। 'सन्न्यासिनो मूढा उदरनिमित्तं च कृतवेषा' इति भावयन्तौ तौ स्वभाषया स्वामिनमापरितोषं निनिन्दतुः। सर्वमिदं जानन्नपि जडवत् तूष्णीमतिष्ठद् विवेकानंदः। तेन खलु तयोर्निन्दारसोऽधिकमुपचिनोति स्म। तथा कुर्वतोस्तयोरग्निरथस्थितिरभवत्। स्थिते चाग्निरथे, स्वामिनं तदधिकारिणा सह परिमार्जिताङ्ग्लभाषया व्याहरन्तं दृष्ट्वा तावाङ्ग्लाववोचतु –"आङ्ग्लभाषानिपुणेनापि भवता कमिति तूष्णीमासितमस्मत्कृते निन्दाप्रसङ्गे?" स्वामी तु स्मयन्नेव स्वस्थमना अवोचत् –' नाहं प्रथममेव मूर्खान् दृष्टवान्। तत् को नु प्रज्ञावान् क्रुध्येत्?' अङ्गारकल्पमिदं वचो निशम्य, क्रोधताम्रावपि तौ स्वामिनो देहदार्ढ्यं पश्यन्तौ पलायनमेव वरममन्यताम्।

राजस्थानगते पत्तने दिनत्रयं यावदनेके जिज्ञासवः स्वामिना विविधचर्चाः प्रवृत्ता अभूवन्। सर्वेऽपि ते चर्चामात्रदक्षाः। न कोऽपि स्वामिनो भोजनादिवार्तामकरोत्। नितरां क्षुधिताय श्रान्ताय च तस्मै पञ्चमवर्णः कश्चिद् भक्तः सविनयमपक्वमेवान्नमाजहार। "भद्र! किमिति पक्वं न दीयते"? इति पृष्टश्च "कथं मया पक्वं भवानश्नुवीत!" इति सादरमवोचत् –

"पचतु भवान्, नाहं भवादृशस्य भद्रस्य स्पर्शं दोषाय कल्पये"। इत्युक्त्वा स्वगतमेव सखेदमब्रूत –"एतादृशा भद्रात्मानः सहस्रशः कुटजेषु वसन्ति। तानस्पृश्यान् वदन्तो भर्त्सयन्तश्च न लज्जामहे। अहो! मूढता हिन्दूनाम्!"

## विदेशयात्रा

अथ नैकैः सुहृद्भिः सनिर्बन्धं प्रार्थितः, खेतडी नृपादिभिश्च धनादिव्यवस्थया सभाजितो विवेकानन्दः अमेरिकां गन्तुं प्रतस्थे। तत्र न्यूयोर्कनगरं प्राप्तः, अवतीर्य पोताद्, गन्तव्यगृहस्य मित्रदत्तं सङ्केतपत्रं विप्रनष्टमालोक्यन्, किंकर्तव्यतामूढ इवाभवत्। मस्तकन्यस्ततम-जुपश्च पथि परिसर्पन् स लोकानां महत् कुतूहलमजनयत्। अपूर्ववेषस्य तस्य पृष्ठतो धावन्ति स्म शिशवः। अटाट्य परिश्रान्तश्च स्वामी मार्गैकदेशे मञ्जूषां निधाय तदुपरि उपाविशत्। अथ तं तथास्थितं विभाव्य काचिदुदारचेतसी महिला सबहुमानमुपसृत्य, स्वस्थानमनैषीत्। स्वमित्रद्वारा च धर्मपरिषद्वार्तां ज्ञातुं तत्र च विवेकानन्दस्य भाषणादिव्यवस्थां कर्तुं प्रायतत। 'विवेकानन्दो न कस्या अपि धार्मिकसंस्थायाः प्रतिनिधिः। अतो न परिषदि भागभागी भवितुमर्हति' इति प्रबोधितः स्वामी चिन्तातुरोऽभवत्। प्रतिनिधिभाव आवश्यक इति न स्वामी नापि भारतीयास्तत्सुहृदोऽविदन्। किन्तु हन्त! राईट नामा स्वामितेजोविजितः प्राध्यापकः कथञ्चिदपि तदायोजयितुं प्रतिजज्ञे। स हि सुहृद् धर्मपरिषदः स्वागतसमित्यध्यक्षं स्वामिनमाश्रित्यैवमलिखत् – "अस्य खलु स्वामिनो ज्ञानं सर्वेषां नः प्राध्यापकानां ज्ञानसमवायमप्यतिशेते।" एवं तेनैव प्राध्यापकेन प्रवेशलाभात् परं परिषत्स्थानं गन्तुं भाटकादिव्यवस्थाप्यक्रियत। तथापि तत्र गमनं यावदनेके प्रत्यवाया उपस्थिताः। तानप्यविगणय्य कथञ्चित् परिषत्सभागृहं गतो विवेकानन्दः।

## विश्वधर्मपरिषद्विजयः

परिषत्सभागृहमतिभव्यं, नानाविद्याविचक्षणैः पूरितञ्चासीत्। अपरिचितजनसहस्रपरितमदृष्टपूर्वं च तत्सभागृहमालोक्यापूर्वं सभाक्षोभमन्वभवद्

विवेकानद । सभाध्यक्षेण सोऽसकृद्भाषणाय प्रेरितोऽपि 'पश्चात्' 'पश्चादि'ति बभाण। अन्तत डॉ बरोमहाशयेन दत्तपरिचय उत्थाय, स्नेहार्द्राभ्या नेत्राभ्या परितो विलोक्य, चेतसा भगवती वाग्देवता च प्रणम्य, व्याख्यातुमारभत–"अमेरिकावासिनो भगिन्य भ्रातरश्च" श्रुतमात्र एवैतस्मिन् मनोहरे पदकदवके, श्रोतार सर्वे सोत्कण्ठा शिर उन्नमय्य मनोहारिणी सन्न्यासि मूर्तिमपश्यन्। रूढसवोधनस्थाने आत्मभावव्यापक तत्सबोधन सुतरामरोचत सदस्येभ्य। व्याख्यानप्रस्तावञ्चैवमकरोत् स्वामी– "नानासयलेभ्यो नानास्रोतोभि प्रवहत् तोय सागरमेव यथा पतति तथा प्रभो! रुचिभेदादधिकारभेदाच्च नानाधर्मैभिरधिश्रिता मार्गास्त्वामेव प्रापयन्ति"। "ये यथा त्वा प्रपद्यन्ते तांस्तथैव भजन्नसि"। एवमादीनि हिन्दूधर्मदृष्टि पुरस्कुर्वन्ति मधुरकण्ठान् नि सरन्ति वचासि पायपाय हर्षोल्थितैर्जनै तालिनिनादैर्निनादितमभवत् सभाभवनम्। सर्वे च मुक्तकण्ठ प्राशसन्त स्वामिवरेण्यम्। ततश्च भूयोभूय प्रार्थित स्वामी दशाधिकवारमभाषत तस्मिन् सभागृहे। तदनु नैका सस्थास्त व्याख्यातु सबहुमान निमत्रयामासु। वर्षद्वय यावच्च अमेरिकाखडे परिव्रजन् चेतश्चुम्बिन्या शैल्या योग भक्तिवेदान्तविषयान् प्रतिपादयामास। तत्र सहस्रशो जनास्त श्रोतु कार्यशतानि विहायाहमहमिकया परापतन्ति स्म। स्व स्वं गृहञ्च त नेतु सानुनय प्रार्थयन्ते स्म।

तत्र प्रवृद्धेन दिगन्तव्यापिनाऽपि यशसा न तमहङ्कारलेशोऽप्यस्पृशत्! नाह विजयोन्मत्त स्यामिति च भावयन् स जगन्मातरमेव तुष्टाव–"जननि! भारतमातरि दारिद्र्योपहताया कि मे यशसा? लक्षशो मे भ्रातरोऽन्नग्रासाभावेन दिनेदिने मृत्युमुख प्रविशन्ति। अत्र हि विभववता धननिधिरुच्छ्वसति। तत्र च भारतीया अन्नाभावाद्वा कथञ्चिदुच्छ्वसन्ति। को हि भारतमुत्तारयेदस्माद् दु खार्णवात्! कस्तेभ्योऽन्न यच्छेत्! दर्शय मात! वयमह देशसहायो भवेयम्"–इति। तत्र स्वामी थोरोनामान दार्शनिकमभिनत्। स्वामिना परामृश्य स एवमलिखत्–'वेदान्तानां गीतायाश्च ज्ञानगङ्गायां

स्नात्वाऽभिप्रैमि यत् तत्तुलनायामास्माकीन दर्शन विद्याश्च तुच्छानि भान्ति" इति। वर्षद्वयम् अमेरिका-इंग्लैंडादिदेशान् परिभ्राम्य, वेदान्तसदेशेन तदीयजनमनासि च वशीकृत्य, भारत प्रति पाश्चात्याना सम्मानभावना च सुधुक्ष्य, प्रतिनिवृत्तो वेदान्तकेसरी भारतम्। अत्रागत्य पुन परित पर्यट्य, लोकेपु सद्धर्मबुद्धि राष्ट्रसेवा च समुद्भावयितु प्रायतत। अन्ते च स्वगुरोर्नाम्ना 'रामकृष्ण मिशन' इति सस्था बेलुरमठाख्यं च रामकृष्णशिष्यसाधनालयमस्थापयत्। नैके वैदेशिका भारतीयाश्च शिष्यास्तमात्मश्रेयसे परिवव्रुः। रामकृष्णमिशनद्वारा चाय भारतीयलोकाना नानोपकारप्रवृत्ति प्रवर्तयामास। यूना सेवाव्रतिना सन्यासिना सघञ्चायोज्य, आमुष्मिकश्रेय समन्वितायामैहिकभौतिकाभ्युदयप्रवृत्तौ त योजयामास।

एतत्सर्वमतिवेगेनानारतमनुतिष्ठतस्तस्य शरीरसपद् विश्लथाऽजायत। हिमवदुपत्यकाया मायावती–आश्रमे स्वास्थ्यलाभाय निवसन्नपि स न स्वस्था प्रकृतिमवाप।

मिस मार्गारेटनाम्नी **(भगिनी निवेदिता)** आङ्ग्लयुवतिस्तस्य शिष्यत्वमवाप्तु त्यक्तसर्वस्वाऽऽगता। स्वामिपादेपु स्थित्वा प्राप्तवेदान्तविद्या च सा मिशनप्रचालित कन्याविद्यालयमाश्रित्य भारतसेवाव्रतिनी बभूव। तथैवानेकैर्वैदेशिकै स्वामिशिष्यैर्देहेन धनेन वाचा वा भारतसेवाऽक्रियत।

तत पुनरपि विदेशान् गत्वा तत्रत्यान् शिष्यान् ज्ञानामृतेन परितोष्य, मठार्थञ्च प्रभूत धनामाहरन् प्रतिनिवृत्त।

१९०२ खिस्ताब्दस्य जुलाईमासस्य चतुर्थतारिकाया शुक्रवारे ब्राह्मे मुहूर्ते प्रबुध्य घण्टात्रय ध्यायन्नतिष्ठत्। गङ्गाया स्नात्वा मधुरेण स्तवेन सर्वभावेन कालि तुष्टाव। सतीर्थ्यैर्वेदान्तादितत्त्व मठादिसचालनोपायाश्च चर्चयन्दिनमत्यवाहयत्। रात्रौ नववादने च प्रियं सहायं परिवृत परमार्थैकप्रवणो ब्रह्मनिर्वाणमवाप।

अन्तिमेपु दिनेपु स भूयोभूयोऽभणत् –

"अनेकशोऽनेकानि मे जन्मानि भवन्तु। दुःखलक्षाण्यनुभूयापि सर्वान्तर्यामिण परमेश्वरमाराधयेयम्। सर्वदुःखिनामश्रूणि प्रमार्जेयं च तत्सेवाकर्मणि जनान् प्रवर्तयेयम्। तया प्रवृत्ताश्च ते सर्वेश्वरं प्रपन्ना भवन्तु"–इति।

अय च तस्योपदेशसार –

"सर्वोऽपि प्राणी वस्तुतो दिव्यरूपः। प्राकृता हि विकारास्तस्य दिव्यभावमावृण्वन्ति। आवरणस्य च तस्यापोहाय यथाशक्तिरेव हि योगो भक्तिर्ज्ञानं वोपायः। दिव्यभावस्य प्रकाशनमेव मानवस्य प्रधान लक्ष्यम्। मतानि सम्प्रदायाः क्रियाकाडा धर्मग्रंथा देवालयाश्चेति सर्वमिदमप्रधानम्।" इति





विरलविश्वविभूति·

# महात्मा गांधिः

बन्धुर्दीनदरिद्राणां विश्वमित्रो दयानिधिः।
सर्वधर्मसमस्त्यागी वैष्णवः प्रेमविग्रहः॥
अहिंसा-सत्यनिष्ठावान् ईश्वरैकपरायणः।
स्वातंत्र्यस्य समाहर्ता महात्मा विश्वविश्रुतः॥

निशाया प्रगाढतमसो नूनं भवति प्रसूतिर्मङ्गलस्य प्रातःप्रकाशस्य।

वर्षाणां शतं पारतन्त्र्यग्रस्तस्यास्य देशस्य दशा गाढेन दैन्यतमसा छन्ना-ऽभवत्। तदा तदा कैश्चित् स्वातन्त्र्यवीरतारकैः कृतेऽपि प्रकाशे नैनत्तमः पराकर्तुमशक्यत, अपि तु तद्गाढतरं समजायत। निराशागर्ते पतिता आसीद् भारतमाता।

अथ तादृशे निराशाभूयिष्ठे समये भारतस्य पश्चिमे समुद्रोपकण्ठे १८६९ ख्रिस्ताब्दस्य अक्टोबरमासस्य द्वितीयतिथौ बाल एक प्रादुरभवत्। अस्य पूतलीबाई नाम्नी माता, करमचदनामा पिता च परमेश्वरैकनिष्ठौ, धर्मपरायणौ, सदाचारसम्पन्नावास्ताम्। पोरबदराख्यस्य नगरस्य शासनस्य मन्त्रिपदमुवाह करमचद । सत्यव्रतस्यास्य कार्यदक्षता, विश्वस्तता, न्यायैकपरता च सर्वत्र प्रसिद्धिमवापु ।

चतुर्थपुत्रस्यास्य मोहनदास' इति नामकरण व्यधीयत कृष्णभक्ताभ्या पितृभ्याम्। अथ बाल्ये नास्य बालस्य कोऽपि विशेष समलक्ष्यत। अन्धकारे प्रकोष्ठात् प्रकोष्ठान्तरमपि गन्तु नापारयताय भीत्या। भूतप्रेतभीतिस्तम त्यन्तमकम्पयत। एकदा धात्रीकल्पा गृहदासी तथा बिभ्यत त "रामनाम्नि गृहीते भूतादयो न त्वा स्प्रष्टुमपि शक्ष्यन्ती' ति सश्रद्धमवोचत्। तत पर श्रद्धाधनश्चाय न कदापि भीतिमन्वभवत्। रामनाम्नश्च परम उपासक सञ्जातो तत पर मोहनदास ।

## सदाचारनिष्ठा

एकदा शालाया परीक्षक आगच्छत्। गणितपरीक्षाया प्रवृत्ताया मोहनदास उदाहरण एकद प्रमादभूयिष्ठमलिखत्। शिक्षकस्तत्र सञ्चरन् प्रमाद तमपश्यत्। इङ्गितेन त प्रमाद दूरीकर्तुं लेखनीय च लिखितु शशस। किन्तु मिथ्याव्यवहारभीरुरय न तदङ्गीचकार। समाप्ते परीक्षणकार्ये, शिक्षक स्तमाहूयात्मसूचन किमिति नानुष्ठितमिति अपृच्छद्। कञ्चित्काल मूक स्थित्वा सविनयमुवाच मोहनदास –'यदह न जानामि तदन्यनिर्दिष्ट लिखित्वा नाह पापमाचरितुमिच्छामि', इति। मिथ्याव्यवहारापेक्षयाऽनुत्तीर्णतैव वरमिति अमन्यत सत्यनिष्ठा निर्दोषोऽय बाल ।

तदनु समवयस्कै सह क्रीडतोऽस्य सङ्गदोषात् धूम्रपान कर्तुं मतिरभवत्। कानिचिद् दिनानि पितृव्यस्य पीतत्यक्ता धूम्रशलाका गृहीत्वा धूम्रपान-

मक्रियत। किन्तु गच्छता कालेन धूम्रपान-व्यसनमवर्धत। त्यक्तशलाकास्तु न पर्याप्ता अभूवन्। अत कम्पमानकरेण गृहात्सुवर्णवलयमचोरयत् मोहनदास। गृहजना न तदविदन्। किन्तु "मया चौर्य कृतम्? कथमहमेवमधम सवृत्त? विना चौर्यनिवेदन न मे भवेच्छान्ति, न च स्यात्पापादस्माद् विमोक।" इति सतत चिन्तासन्तानसतप्त अशान्तमना आसीत् स। स पितर साक्षाद्वक्तुमप्रभवन्, पत्रारूढ कृत्वा, आत्मनीय चौर्यवृत्त न्यवेदयत्, प्रार्थयञ्च पौन पुन्येनापराधमिम क्षन्तुम्। प्रगल्भचेता अस्य पिता तमाह्वयत्, प्रेमगद्गदेन कण्ठेनाभाषत च यद् "नाह कुप्यामि त्वयि अपराधाय अस्मै। अपराध्यताऽपि त्वया यत् सत्यमुक्तमिति नून मे त्व प्रियतरोऽसि सवृत्त। गच्छ, क्षान्तोऽसि मया" इति। तत पर सदैव परित्यक्त धूम्रपानम्। सत्यनिष्ठा ररक्ष एन व्यसनदु खात्। मोहन तारुण्ये प्रविष्ट देशपारतत्र्येण खिद्यति स्म। केचन सवयस्का अभणन्—"मासभक्षण विना न देहो बलवान् भवति, बलमन्तरा च न वय विदेशीयान् जेतु प्रभविष्याम। अतो मासभक्षण स्वातत्र्यलाभायापरिहार्योऽस्त्युपाय"। विचारहीनो मोहन तत्तथैवामन्यत। जुगप्सापूरितेनापि चेतसा स मासमभक्षयत्। किन्तु हन्त! आचारपरिपूते वैष्णवाना कुले प्रसूतस्यास्य चेतो तेन कर्मणा आत्मघृणया सुतरा सतप्तमभूत्। रात्रौ सुप्तश्च स भक्षितमासस्य अजस्य करुणकरुण क्रन्दितमिवाशृणोत्। 'किमिदमाचरित निर्घृणेन मया! कथनु मुच्येय पापादस्माद्!" इति अनवरत विचारयन्तमिम मनस्ताप सुदीर्घं सतापयति स्म।

## विदेशगमनप्रस्ताव:

समाप्ते माध्यमिकाध्ययने, देशान्तरमध्ययनाय प्रेष्यतामस्माक मोहन इति अस्य पितृव्य भ्राता चाचिन्तयताम्। पिता तु पूर्वमेव दिव गत। "यद्यय इंग्लैंडदेशाद् विधानतत्रस्योत्तममुपाधि 'बेरिस्टर' पदवाच्य लभते, अस्मत्कुल महती प्रतिष्ठा विन्देत, अयञ्च प्रभूत धनमर्जेत्" इत्यासीद् मान्यता ज्येष्ठानाम्। ज्येष्ठो भ्राता न बहु अर्जति स्म। अत तत्र गतागतयो अध्यय-

नस्य च व्यय वोढु दु शकममन्यत। अथापि ऋणेनापि मोहनाध्ययनप्रत्यूहो निवर्तनीय इति सकल्पित तेन। निश्चितञ्च मोहनस्य विदेशगमनम्।

किन्तु धर्ममूर्तिर्माताऽनुजानीयाद्वा! इत्यासीद् भीति सर्वेषाम्। एकदा मातरमुपसृत्य कुटुम्बिजनैर्निवेदितमिदम्। सा तु विदेशगमने भक्ष्याभक्ष्य-स्पृश्यास्पृश्यविवेको न पालयितु शक्य, अन्येऽपि चरित्रघातका दोषा सभाव्यन्ते विदेशगमनादिति आकलय्य, वत्सस्य मोहनस्य विदेशयात्रा न युक्तरूपाममन्यत। प्रकाशितवती च स्वीय मतमिदम्। अथ गतेष्वन्येषु मोहनमेकाकिन सा पृष्टवती वत्स! किं त्व चिन्तयसि विषयेऽस्मिन्?' इति। सोऽभणत्--'चेत् त्वमनुमन्यसे गच्छामि, नो चेन्न गच्छामि' इति। पुनर्विरम्योवाच 'ममाधर्माचरणभीतिस्त्वया त्याज्या। नाह कदापि स्वैरचारी भविष्यामि' इति। मोहनस्य विदेशगमनेच्छा बुद्ध्वा, सत्यसकल्पस्य तस्य स्थिरा मति विदन्ती माता त सप्रेमाभाषत – 'पुत्र! जानामि ते सुशीलम्। तव प्रकर्षो विदेशगमनेन भवेच्चेत्तत सोत्साह गच्छ। नाह बाधा करोमि। किंतु परदार-मासभक्षण-मदिरापानानि न कदापि सेविष्यसे इति प्रतिजानीहि' श्रुत्वैतद् मातृवत्सलो मोहन नि सदिग्ध तदनुपालयितु प्रतिज्ञातवान्।

मुबईनगराद् यात्रिकपोतेन स लडननगर प्रातिष्ठत।

## विदेशवास

तत्र च वर्षचतुष्टयमुषित्वा अभिमतमुपाधि लब्ध्वा प्रतिनिवृत्तो मोहन स्वदेशम्।

लडननिवासकाले निरामिषभोजन दुष्प्रापमिति कतिचिद् दिनानि विना भोजनमयापयत् मोहन। किन्तु मातुराज्ञा नोदलघयत्। यत्र जलमिव मदिरा पिबन्ति जनास्तत्र मदिरात्याग कियान् दुष्कर! अथापि नास्पृशत् कदापि ताम्। एकदा वयस्यैर्वाराङ्गनागृह प्रवेशित स लज्जया परिभूत बाल इव प्रमत्त इव च व्यवहरन्, आत्मान चरित्रभङ्गाद्ररक्ष। साधुस्वभावेन,

सेवानिरतेन चानेन जितानि तत्रत्याना हृदयानि। तत्र यस्या गृहेऽयमवसत् सा वृद्धा तस्मिन् सुतनिर्विशेषमस्निह्यत्। कदाचित् सुशीलया कन्यया सह च अस्य विवाह घटयितुमचिन्तयत्। सा कन्या बहुशो वृद्धाया गृहमागच्छन्ती मोहनस्य सुपरिचिताऽभवत्। कन्यापि सा सुशीलेति सुशीलस्यास्य तया सयोग उभयो श्रेयसे सुखाय च सपद्येतेति शुभकल्पनैव ता वृद्धा तथा कर्तुं प्रैरयत्। एकदा कन्यासहाया सा वृद्धा मोहनमाहूय चिरपरिचितौ तावेकाकिनौ विसृज्य स्थलातर गतवती। एकान्ते परयुवतिसान्निध्यमननुभूतवता मोहनेन तदैव वृद्धायास्तस्या अभिप्रायस्तर्कित। अह परिणीत इति न जानातीय भद्रमहिलेति पर्यालोच्य, ता पत्रेण सर्वमपि आत्मगत वृत्त न्यवेदयत्। महतो धर्मसङ्कटाच्च सर्वान् अरक्षत्।

## वाक्कीलकर्मारंभ. निष्फलता च

अथ निर्वृत्तेऽध्ययनव्यतिकरे स्वदेश प्रतिनिवृत्तो मोहन। किंकर्तव्य ताविमूढोऽय मुबापुर्यां वाक्कीलव्यवहारायावसत्। प्रतिदिन स्वस्यानात् क्रोश वर्तमाने महान्यायालये पद्भ्यामेवागच्छत्। गृहकार्यञ्च सर्वं स्वयमेवाकरोत् येन स्वल्पव्ययेन जीवनयात्रा चानयति स्म। एकदा काचिद् वृद्धा न्यायालये स्वव्यवहाराय मोहन वाक्कीलत्वेन न्ययोजयत्। पारिश्रमिक निश्चित्य, व्यवहारविषय च सम्यक् पर्यालोच्य, मोहन प्राड्विवाकसमीप स्वीय व्यवहारमुपस्थापयितु उदतिष्ठत्। किन्तु हन्त। सभाक्षोभपराभूतस्य मुखादक्षरमपि न नि सरति स्म। सर्वमपि भवन, जनाश्च परितो भ्रमन्त इवालक्ष्यन्त। सवावयवेपु जातवेपथुर्मोहन किञ्चित्तूष्णी तिष्ठन्नात्मान सस्तम्भयितुमप्यशक्त उपाविशत्। आवेदयच्च व्यवहारयोजिका वृद्धाम्-'नाह भवत्या व्यवहार निर्वोढु शक्त, प्रतिगृह्णातु धनम्' इति। तत पर सुदीर्घकाल यावन्न व्यवहारकार्यं समारब्धुमभवदस्य साहसम्। शिक्षककर्म लब्धु प्रयतमाना न तदप्यलभत। विदेशे लब्धविद्यास्तदानी समाजे महद्-गौरवमविन्दन्। किन्तु, लज्जाशील मोहन सर्वथा अयोग्य इति तत्परिचिता अमन्यन्त।

## दक्षिण-आफ्रिकागमनम्

अथ स्वोदरपूर्तिपर्याप्तमपि धनमर्जितुमक्षमो मोहन आफ्रिकाप्रदेशे वाक्कीलकर्मानुष्ठातु निमन्त्रित । उपायान्तरपश्यश्चाय तत्र गतवान्। अस्यासीत् सकल्प वाक्कीलकर्मण्यपि नासत्यमनुष्ठेयमिति। शासनस्य करचौर्य न गोप्यम्–स्वव्यवहारात् पूर्वं कर दत्त्वैव शासकानामन्याये सति व्यवहारोऽनुष्ठेय । असत्यभूयिष्ठे जगति कथन्वेतादृशो वाक्कीलो जीविका लभते। इति बहुभिर्बहुधा प्रचोदितोऽपि मोहन सत्य प्राणेभ्योऽपि गरीया मेने। न चासत्यव्यवहारे आत्मानमयोजयत्।

## सत्याग्रहारंभः

अथैकदा धूमशकटे प्रथमश्रेण्या प्रवास कुर्वाणो मोहनो गौरेणाधिकारिणा तृतीयश्रेण्यैव प्रयातुमादिष्ट । "प्रथमश्रेण्यै क्रीता मया मूल्यपत्रिका। अत स्तयैव श्रेण्या प्रयास्यामि" इति सधैर्यमवोचन्मोहन । "अगौरा तृतीयश्रेण्यैव प्रवसन्त्विति भवति अधिदेश । श्यामवर्णस्य तव नास्त्यधिकार प्रथमश्रेण्या गन्तु"मिति सहुकृतमवोचद् गौर । "नाह प्रथमश्रेण्या अवतरिष्यामि, क्रियता यच्छक्यते भवद्भि"। इति मोहनस्य दृढ वच श्रुत्वा गौरै स बलान्निक्षिप्तोऽधस्तात्। अस्य सामग्री च अध प्रक्षिप्ता या स्थानरक्षकेण सग्रहीता।

अनेनावमानेन नितरामदूयत मोहनस्य हृदयम्। "मदपक्षेयापि दीना हीनाश्च बहवो भवन्ति। तेषा का दशा भवेद् यद्यहमेवमवमन्येय।" इति विचारसन्तत्या भृश सतप्तोऽस्य प्रतिकाराय दृढसकल्पोऽभवत्। किन्तु शस्त्रास्त्रसनाथाना गौराणा शासकाना प्रतिकार केनोपायेन विधीयेत। 'भारतीया प्राय निर्धना शस्त्रास्त्रहीना, बलेन सख्यया च न्यूना, अथ कथ ते प्रतिकुर्वीरन् गौराणाम् अत्याचारान्? ।' इति चिन्तामग्नोऽयं सत्यनिष्ठ एव निश्चितवान् 'भवतु, परमात्मा न्यायवर्तिन, सत्यानुष्ठायिन, श्रद्धालु,

मुशीलश्च सदैव ससेवते। एते शासका, स्वप्रभुत्वेनोन्मत्ता गर्विष्ठाश्च जाता। अत स्वीयमकार्यं न जानते। मया दीना दशामापन्ना मद्भ्रातरो भय विहाय प्रेम्णाऽहिंसकैरुपायै गौरान् प्रतिकर्तुं प्रबोधनीया। मार्गोऽय दुष्कर.। प्रथम न शासनप्रतिकारे सज्जा भवेयुर्जना, अथापि अयमेवोपाय फलप्रवण, श्रेष्ठतमश्च वर्तते' इति दिवानिश विचिन्तयन् मोहनदास भारतीयानाहूय स्वीय सकल्प निवेदितवान्। तदानीमेव शासकै घोषित यद् "ये ख्रिस्तविधिना न परिणीतवन्त तेषा विवाहो न शासनसम्मत। तादृशौ दम्पती न विवाहितानामधिकारानर्हत" इति। 'क्षते क्षार'मिव घोषणयाऽनया नितान्त सतप्ता भारतीया मोहनदर्शित मार्गमनन्योपायतया स्वीकृत्य, 'अहिंसकसत्याग्रह' कृत्वा, विना प्रतिकार लगुडमारमनुभवन्त कारागाराणि जग्मु। तेषु मोहनदासगाधिपत्नी कस्तुरबा अपि स्त्रीणा नेत्री भूत्वा कारागार प्रविष्टा। विना प्रतिहिंसा सहस्रशो जनाना शासनभङ्गरीतिमिमा दृष्ट्वा सकलमपि जगत् विस्मयमूढमभवत्। सहृदया विचक्षणाश्च सर्वत्र मोहनदासस्याप्रतिममिमभ्युपाय प्राशसन्। ईग्लैंडदेशेऽपि तत्रत्या जनता दक्षिणाफ्रिकाशासकाननिन्दत्। सर्वमिद विक्षोभ विलोकय शासका अलज्जन्त। कारागारनिगडितान् भारतीयाश्च तत्प्रतिकूलविधि निराकृत्य बन्धनमुक्तान् चक्रु। एव भारतीयाना दु खान्यपोह्य मोहन पुनरागाद् भारत देशम्। पञ्चदशवर्षाणि यावदाफ्रिकादेशेऽनेन कृतेन सेवाकार्येण विशिष्य च अहिंसकसत्याग्रहाभ्युपायेन सर्वत्र गाधे मोहनदासस्य नाम ख्याति जगाम। भारतीयास्तु 'गाधि' नाम श्रुत्वैव आदरेण शिरो नमयन्ति स्म। अतो यदा मुबापुरीमवातरद् मोहनदास गाधि सहस्रशो जनास्त स्वागतीकर्तुमहमहमिकया परापतन्।

अत्रागत्य, देशेऽत्र तदानीं जनकल्याणाय स्वातन्त्र्याय च प्रवर्तमानान् तिलक-गोखले-एनीबिसट-श्रीनिवासशास्त्री-फिरोजशाहमेहता-प्रभृतीन् देशनेतॄनपश्यत्। तत्र गोखलेमहाशयेन सह पूर्वमेवाफ्रिकादेशे लब्धपरिचयो गाधि देशभक्तिमन्त वृद्धिमता वरिष्ठमेन स्वीय गुरुत्वममन्यत।

गोखले-उपदेशेन गांधिमहाशयो वर्षं यावद् भारतस्य सकलभागेषु परिभ्रमणं कृत्वा देशवासिनां वास्तविकीं स्थितिमपश्यत्। साक्षात्कृतस्थितिश्च लोकानां दारिद्र्येण, अज्ञानेन, परस्परनिन्दापरतया, अस्पृश्यतादि-कुरीति-ग्रस्तत्वेन च भृशमतप्यत। तद्दूरीकरणमेव स्वीयं प्रथमं कर्तव्यमिति च निश्चयमकरोत्।

भारते किल तदानीं 'राष्ट्रिय महासभा' नाम्नी संस्था लोककल्याणाय प्रवर्तमाना आसीत्। अस्या सभायाः सदस्येषु केचन पूर्णस्वराज्यमभिलषन्ति स्म, केचन तु ईंग्लेंडशासनान्तर्वर्ति स्वदेशीयशासनमकामयन्त। तत्र प्रथमानां बालगंगाधर तिलक, अपरेषां च फिरोजशाह मेहता अग्रण्यौ आस्ताम्। गांधिः न तदवधि कमपि पक्षमभजत्। अचिरादेव प्रथमं गोखले ततश्च तिलकः परलोकं प्राप्नुताम्। तदनु गांधिः एव सर्वेषां देशभक्तानामेकायनमभवत्। आध्यात्मशक्त्या, देशभक्त्या, स्वभावसारल्येन, दीनसदृशजीवनचर्यया, परमात्मैक-निष्ठया च सर्वे भारतीया अमुं 'महात्मा' इति गौरवेण व्यपदिशन्। तदनु 'रोलेटविधान' प्रतिकारार्थं १९१९ ख्रिस्ताब्दे, सायमन कमिशन बहिष्कार-प्रवृत्तौ १९२१ ख्रिस्ताब्दे च गांधीप्रयोजिता सत्याग्रहरूपा प्रवृत्तिः समारभ्यत। एतन्मिषेण भारतस्य कोणेकोणे स्वराज्यभावना प्रादुर्बभूव। जनानां दारिद्र्यनिवारणाय स्वदेशोत्पन्नान्येव वस्तूनि उपयोक्तव्यानि, स्वयमेव स्वीयानि वस्त्राणि निष्पादनीयानि, मदिरापरित्यागः कर्तव्यः, विभिन्न-धर्मिणामैक्यं संपादनीयम्, स्त्रीभिरपि राष्ट्रसेवाकर्मणि आत्मा योक्तव्य' इत्यादिकर्मभिः महात्मनाऽनेन स्वाराज्यप्रवृत्तिः, पूर्वमिव न केषाञ्चिच्छि-क्षितानामेव, अपितु सर्वस्या जनतायाः कर्तव्यमिति प्रतिपादितमभूत्। गांधिमहात्मनः वेष, भाषा, व्यवहार, सर्वमिदं दरिद्रतमेन भारतीयेन समानमिति सर्वा जनता तमात्मनीनं, समानसुखदुःखिनञ्चामन्यत। ग्रामे ग्रामे, कुटजे कुटजे च गत्वा महात्मनानेन भारतस्य हृदयमिव प्रविष्टम्। रोगिणां शुश्रूषां स्वयमन्वतिष्ठत्। दुर्भिक्षे, भौतिके चोत्पाते, बुभुक्षितानां प्रणष्टसर्वस्वानाञ्चाश्रुणि स स्वहस्तेन प्रामार्जीत्।

पूर्वं 'अहमदाबादनगरे' १९१७ ख्रिस्ताब्दे साबरमतीनदीतटे महात्मना आश्रम एक स्थापित । तस्य च नाम 'हरिजन-आश्रम' इत्यक्रियत । अस्पृश्यत्वेन गणिताना, अतश्च महत्कष्टमनुभवतामन्त्यजानामपि तत्र निवास परिकल्पित । एतदनेकेषा विरोधमविगणय्य, आर्थिककष्टपरपरा च विषह्य कृतम् । "परमात्मना सृष्टा सर्वेऽपि प्राणिन समाना । जन्मना न कोऽपि नीच न चापि उच्च । सर्वेषु एक परमात्मा वसतीति घोषयति हिन्दूधर्म सडिण्डिमम् । अत अस्पृश्यत्वभावना हिन्दूधर्मस्वरूपानवबोधप्रसूता, सर्वथा तूर्णमेव परित्याज्या । अन्यथा हिन्दूधर्मो विलयमुपेयाद् । हिन्दूनामङ्गरूपा एवैमेऽन्त्यजा । वस्तुत निर्बला ते हरे जना भवन्ति" । एवमनेकशो वदन्नयमन्त्यजाना दलितानाञ्चोद्धाराय बद्धकटि महात्मा स्वय प्रावर्तन्ताऽन्याश्च प्रावर्तयत ।

एकदा आश्रमे तत्र किमप्यन्न नासीद् । हरिजनप्रवेशादुद्विग्ना हिन्दव इति अर्थसाह्य न कुर्वते स्म । 'बापु ! किं करिष्याम । कथनु भोजयिष्याम सर्वानि' ति पप्रच्छु सहाया । "परमेश्वर एव सर्वमनुकूल विधास्यती"— त्यासीदुत्तर महात्मन । हा हन्त ! मध्याह्ने कश्चिदवितर्कित एवागच्छद् अदाच्च १३ सहस्ररूप्यकात्मक धनम् । कोऽय इति न कोऽप्यविदत् । न च स आत्मविषये किमप्यभाषत । धन दत्त्वा सत्वर स तूष्णी प्रत्यगच्छत् । किं नोक्त गीतासु 'योग-क्षेम वहाम्यहम्' इति ?

महात्मा गाधि स्वानुयायिभ्योऽनारतमुपदिशति स्म— "अन्याय प्रत्य स्माक वैरम्, न अन्यायिन प्रति । अन्यायी लोभात क्रोधात्, अज्ञानाद्वा दुर्मार्ग प्रपद्यते । अस्येय दुर्मार्गप्रवृत्तिर्निरोद्धव्या । सा सर्वात्मना प्रतिकर्तव्या । किन्तु अन्यायी मनुजो नास्माक द्वेषविषयो भवितुमर्हति । तेन कृत कारित वा कष्टमस्माभिर्निराकुलं प्रेमपूरितहृदयैश्च सोढव्यम् । अहिंसया, सत्यनिष्ठया, प्रेम्णा च प्रतिक्रियमाणो दुराचारी कालेन सत्यासत्य धर्माधर्म च जानाति । येन अस्माकमभीष्टमन्यायदूरीकरणकार्यं सिद्ध्यति । ईशाच्छन्नमिद सर्वम् । सर्वत्र परमात्मैव वर्तते । अत न कोऽपि स्वभावत दुष्टो भवति । उपर्युक्त-

कारणंदृष्ट्वा सर्वं पूर्वाणोऽपि अस्मत्प्रेमप्रवृत्त्या स्वस्य वान्तव स्वच्छ स्र निश्चयेर प्रपद्यन्ते। नून सर्वे प्राणिनोऽस्मद्बन्धवा भवन्ति"। इति।

एतादृशेन प्रेमयोगेन प्रवृत्तो गाधिमहाशय पुरा शत्रुभूताननेकान् सुहृद्भाव प्रापितवान्। शत्रवोऽपि तस्मिन् विश्वसन्ति स्म। परोक्ष तस्य साधुभावञ्च प्रशमन्ति स्म। अत वस्तुत 'अजातशत्रु' महात्मा गाधिरिति सर्वे सर्वत्र स्वीक्रियते।

## दांडीयात्रा

साबरमतीनदीतटे वसति गाधिमहात्मनि, लवणकर शासनेनातिवर्धित। दीनाना कृत सर्वथोपयुक्तस्य लवणस्यापि महार्घता सपादयितुरि शासने गाधिना पुण्यप्रकोप प्रदर्शित। 'न चेद्दूरीक्रियते करवृद्धि, अह सानुयायी करशासनभङ्गमाचरिष्य' इति राष्ट्रपानाय प्रख्यापित पत्रेण। करनिवारणाभावाच्च स्वाश्रमात ७९ जनै सहित, हस्तयष्टि,, अर्धनग्न, कृशशरीरो महात्मा द्वारिकां प्रस्थित सुदामेव, पद्भ्यामेव 'दाडी' नाम कोशार्धशतदूरस्थित समुद्रतटग्राम गन्तु प्रातिष्ठत। सत्याग्रहिण प्रतिदिन प्रायो पञ्चक्रोशान् अगच्छन्। महात्मा मध्येमार्गं प्राप्तेषु ग्रामेषु, मिष्टान्न पीपीलिकाचयमिव सम्मर्दन सपतन्त जनगण प्रेमवचोभि परितर्पयन्, तेषु स्वाराज्यभावना च सन्धुक्षयन् दशर्मिदिने दाडीग्राम प्रापत्। तत्र प्राप्तिकालात् पूर्वमेव मार्गे त सहस्रशो जना सममिलन्। येन गगोत्रीनिर्गता सगमसागरमुपधावन्ती गगेव सा आरभकृशा जनसरिद् विशालतामवाप। महात्मना सह स्त्रिय, पुरुषा बाला जरठा इति सर्ववयोवेषा अभूतपूर्वमिम यात्रामहोत्सवमन्वभवन्। सर्वेषामग्रगामी महात्मा सर्वप्रथम स्वयमेव आङ्ग्लसाम्राज्यभङ्गाग्रदूत त लवणकरशासनभङ्गमकरोत्। शासनेन विश्रब्ध सत्याग्रहिणस्ताडयितु विसृष्टा वृकतुल्या सैनिकास्तान् निरस्त्रान् अहिंसाव्रतिन, सत्याग्रहिण, प्राताडयन्। बहूना शोणितधाराभिस्तीर्थरजस्य समुद्रस्य पुण्यस्तट पुण्यतरतामवाप। शासनेन गाधिमहात्माऽन्ये च अग्रण्य सरोजिनीनायडुप्रभृतयो कारागारे निक्षिप्ता।

किन्तु एतेन समग्रेऽपि भारते वर्षे स्वातन्त्र्यप्रेमिषु महान् विक्षोभ समजनि। इतोऽपि भूयसि दमने स्वातन्त्र्यप्रार्थिनामुत्साह अधिकाधिक विवर्धिष्णुरेवासीत्। शतशो युवानो युवत्यश्चास्थिभङ्गमप्यविगणय्य करध्वजा नगरे नगरे ग्रामे ग्रामे च शासनविरोधाय सधैर्यं पङ्क्तिशो निर्गच्छन्ति स्म। सर्वे कारागारा तैः पूरिता अभूवन्। न च लोकाना स्वातन्त्र्योत्साह परिहीयमान आलक्ष्यत। अत शासनाधिप (वाईसरॉय) 'इरविन' गान्धीना सह सन्धिकरणाय निमन्त्रण प्रेषयामास। येन विश्वासशीलेन गान्धिना सत्याग्रहप्रवृत्ति स्थगितीकृताऽभवत्।

## इंग्लेंडपरिषद्

तदनु इंग्लेंडदेशे भारतप्रतिनिधीनाहूय तैः परामर्शो विधेय इति तद्देशीयशासनेन घोषितम्। भारतीयजनताया एकमात्रप्रतिनिधिर्महात्मा गान्धिरिति जानता शासनेन 'गान्धि' अपि अन्यैः सह मन्त्रणायै निमन्त्रित। तच्च विश्वासधनेन गान्धिनाऽङ्गीकृत गतवांश्च स इंग्लेंडदेशे स्वीयैः द्वित्रैः सह।

परतु हन्त! कुटिलमति इंग्लेंडशासन सत्याग्रहभङ्गायैव उपायमिममायोजयत्, न स्वातन्त्र्यदानायेति विस्पष्टीभूत गान्धिनाऽन्येषाञ्च। अत रिक्तहस्त एव गान्धि पुनरागमत् भारतभूमिम्।

## सेवाग्रामनिवासः

दाण्डी प्रस्थानाय विसर्जित साबरमती-आश्रम न कदापि प्रतिगन्तुमैच्छद् महात्मा।

अतस्तेन वर्धासमीपे 'सेवाग्राम' नामा आश्रमो निर्मित। निर्जनप्राये वन्यजातिपरिवृतेऽस्मिन्नाश्रमे कुटजपटलान्य प्रादुरभूवन्। न केवल भारतभागेभ्योऽपि तु जगद्भागेभ्योऽप्यत्र महाजना आगच्छन्ति स्म। महात्मनो दर्शनेन वार्तालापादिभिश्चात्मान सफलजीवन मन्यन्ते स्म।

# आर्तसुहृद् गांधिः

अथैकदा आश्रमस्य नातिदूरे वृक्षस्याधः भूमिन्यस्तपोटिकः कश्चिद् वृद्धपुरुषः सञ्चरता गाधिना दृष्टः। स तु गाधिमुपसृत्य दूरादेव भूमिं शिरसा स्पृष्ट्वा बद्धाञ्जलिरतिष्ठत्। को भवानिति च पृष्टः 'भवता सह कारागारे कृतवासः परचुरे शास्त्री भवामि मन्दभाग्य' इति अभाषत स कुष्ठरोगी। अग्रे च विलम्ब्यावोचद्–'भवद्दर्शनेन चरितार्थः श्व एव प्रतिनिवर्तिष्ये।' इति। 'कुत्र गमिष्यति भवान्?' इति पृष्टः पुनः' एतादृशं व्याधिग्रस्तं मां कुटुम्बिजनोऽपि तिरस्कुर्याद्, अतो यत्र क्वचन परिभ्रमन् जीवितशेषं यापयिष्यामि,–इत्यवोचत्। श्रुत्वैतत्करुणैकधनो महात्मा अचिन्तयत्–'यदि इममत्र स्थापयेयं मदधीनानां स्वास्थ्यविकारभीतिः। न चेदिममङ्गीकरोमि मे परमेश्वरनिष्ठा वितथा स्यात्। किं कुर्याम्?'' इति विचारमूढोऽभवत्। द्वितीयेऽह्नि प्रातः परचुरेशास्त्रिणं स्वयमेवोपसृत्य आह्वयत्। स्वावाससमीप एव नवीनं कुटजं निर्माय तत्रोषितुं च प्रार्थयत्। तत्र च प्रतिदिनं स्वयं ब्राह्मे मुहूर्ते गत्वा तैलादिमर्दनेन तं सिषेवे। तत्सेवाबलाच्च 'शास्त्री' नीरोगी बभूव।

अत्र परं भारतीया जनता स्वाश्रिता, स्वातन्त्र्यलाभानुरूपा विधातुमनेकाः प्रवृत्तयः प्रचालिता गाधिना। गाधिप्रेरिताः सहस्रशः देशभक्ताः कार्यकराः स्वीयान् समृद्धानुद्योगान् विहाय ग्रामे ग्रामे स्वदेशीयवस्त्रप्रचारणं, राष्ट्रियभावनायाः प्रसारः, स्वदेशीयभाषाद्वारा शिक्षावितरणम्, हरिजनानां, वन्यजातीनाञ्चोद्धरणम्, विविधजातीयानां बन्धुभावस्थापना चैवमादिषु कर्मसु निःस्वार्थं प्रवर्तिता अभूवन्।

केवलं भौतिकमभ्युदयमेव जनता न बहु मन्येत, भारतीयः संस्काररविश्चावश्यं रक्षणीयम्, इति कलयित्वा गाधिमहात्मना अहिंसा-सत्य-अस्तेय-ब्रह्मचर्य-अपरिग्रहेति पञ्चव्रतानां महिमानमभिवर्धयितुं न केवलमुपदेशेन परंतु स्वस्य स्वाश्रमवर्तिनाञ्चानुष्ठानेन प्रवर्तितम्। प्रतिदिनं प्रातः ५वादनसमये सामूहिकी परमात्मप्रार्थना विधीयते स्म। सायं पुनः सहस्रशो जनानां सम्मर्द-

रूपाया समाया प्रार्थनाऽनुष्ठीयते स्म। यत्र प्रार्थनाया पर विविधान् विषया-नाश्रित्य व्याख्यानद्वारा लोकाना कर्तव्यदिशासूचन क्रियते स्म।

भौतिकापेक्षया अध्यात्मिकमभ्युदयमतितराम् आवश्यक मेने महात्मा। एकदा तेन प्रोक्तम् "नश्वर देहमभिवर्धयितु कार्यक्षम ज रक्षितु वयमन्नमपेक्षमहि। तर्हि तदपेक्षयापि शाश्वतस्य आत्मनोऽभिरक्षार्थं कुशलतार्थं चापेक्षितम् आहार वयमवश्य लभेमहि। आत्मनश्चाहारो भवति परमात्मन उपासना"। इति।

अथ द्वितीयविश्वयुद्धसमय समागत। भारतीयजनतायाः साह्यमधिगन्तुम् आङ्ग्ला सोत्कण्ठ प्रायतन्त। किन्तु विना गाधिसम्मति न भारतीयजनतासाह्यलाभ। गाधि च विना स्वाराज्यप्राप्ति न साह्य वितरेदित्यासीत् परिस्थिति। आङ्ग्लशासन स्वाराज्य दातु नेच्छति इति विभाव्य महात्मना १९४१ वर्षे व्यक्तिश सत्याग्रह आरब्ध। तदनु १९४२ ख्रिस्ताब्दस्यागस्तमासस्याष्टमतारिकाया बवईनगरे मिलितन राष्ट्रियमहासभाधिवेशनेन गाधिप्रचोदितन सामूहिकसत्याग्रहाय जनता आकारिताऽभवत्। समनन्तरमेव गाधिसहिता सर्वे नेतार कारागारे निगडिता। द्वितीयदिनस्य प्रभात एव समग्रेऽपि भारत शासनविरोधी विद्रोहानल सहस्रशा ज्वालाभि प्रज्वलितोऽभूत्। एकत शासन दमनव्यग्र सद् विविधै कठोरैरुपायै जनतासरम्भ नियमयितुमुच्छेत्तु च बद्धकटि आसीद् अपरतश्च 'प्राणास्त्यक्ष्याम स्वातन्त्र्य वा लप्स्यामहे' इत्यध्यवसायवती अभवत् भारतीया जनता। तदनु बहुतिथे काले व्यतीत पूर्व 'पेथिक्लारस कमिशन्' तत 'क्रिप्सभिशन इति प्रतिनिधि मण्डलद्वयेन भारतनेतृभि सह सधि घटयितु ब्रिटिशशासन प्रावर्तत। मुस्लिम लिगनेता महम्मदली झीना भारत मुस्लिमराष्ट्र हिन्दूराष्ट्रमिति द्विधा विभक्त कर्तुमैच्छत्। तच्च गाधिप्रभृतया नान्वमन्यन्त। इदमेव वैमत्यबीज पुरस्कृत्य शासका भारत स्वशासन परिरक्षितु कृतमतयोऽभूवन्।

अन्त च गाधिमहात्मन सम्मतिमनधिगम्यापि राष्ट्रियमहासभा द्विधा विभक्तस्य भारतस्य स्वायत्ततामङ्गीचकार। तत्र प्रमुख कारण हिन्दु-

मुस्लिमकलह एवाभूत्। यत्र बहुसख्यका मुस्लिमास्तत्र तैर्निर्दयं हिन्दू रुधिराणि वाह्यन्ते स्म। अन्यत्रापि मूस्लिमा उपद्रविणोऽभवन्। पाकिस्तान अङ्गीकारेणापि इय मानवहत्या प्रतिरोद्धव्येति नेहरु-सरदारप्रभृतय आचरयन्। किन्तु हन्त! कृतेऽपि विभाजने, मुस्लिमैं गृहीतेऽपि पाकिस्ताने, न भारत भूरमुच्यत हिंसाताडवात्।

## स्वातंत्र्यप्राप्तिः

१९४७ ख्रिस्ताब्दस्य अस्तमासस्य १५ तारिकाया भारतदेश पूर्णतया स्वतन्त्रता प्राप। प जवाहरलालनेहरुनेतृत्वे भारतराष्ट्रियमहासभाया मन्ति-मडलम्, आङ्ग्लेभ्य देशशासनमगृह्णात्। 'पाकिस्तान' नामक मुस्लिमशासन च पूर्वपश्चिमयो भारतखडयो प्रतिष्ठामवाप। कन्तु नैतावतापि दैवहतकस्य शान्तिरभिमताऽऽसीत्।

प्रतिदिन शतश सहस्रशश्च हिन्दव सिक्खाश्च नृशसतया हन्यन्ते स्म। तथा गृहाणि लुट्यन्त स्म। बाला पदि्भ चक्रम्यन्ते स्म। स्त्रिय पश्यतामेव पतिपितृपुत्राणा ह्रियन्ते स्म। पाकिस्तानगतमिम हत्याताण्डव श्रासश्राव भारत तत्प्रतिकारपरायणैर्हिन्दुसिक्खैर्मुस्लिमाना पीडनमारभ्यत। धर्म नाम्ना समुद्भूता निराबाध च नृत्यन्तीमिमा परस्परद्वेषपिशाचिनी दृष्ट्वा वसुधैव कुटुबकमिति भावयतो महात्मनश्चेत परम सतापमगच्छत्। 'निखिलेपि जीवने मया कृत कर्म भस्मसाद् भवन्नाह पारयामि द्रष्टुम्। एकस्या एव जन्म-भूमिमातु कुक्षे प्रसूता, तथैव च पोषिता इमे विमूढा धर्मनाम्ना राक्षसी वृत्तिमातिष्ठन्त। धर्मो नून परस्परस्मिन् प्रीतिमुत्पादयेन्न द्वेषम्।' इति अविरत प्रलपति स्म विनष्टमानस करुणैकधनस्तपस्वी गाधि। एवमन्त-स्तापतप्तो महात्मा परिगणितपरिजन पाकिस्तानस्य पूर्वभागे जातिकलह-दावानलदग्ध नोआखलीप्रदेश जगाम। तत्र प्रतिदिन पञ्चशान् क्रोशान् पद्भ्यामेव समचरत्। ग्रामाद् ग्राम सचरतोऽस्य समक्ष नष्टसर्वस्वा, हत वियुक्तस्वजनाश्च विलपन्त्य स्त्रिय, शिशव, जराजर्जरिताश्च स्वानि दु खानि

न्यवेदयन्। ममदु ख महात्मा तान् प्रेमभरितया दृशाऽपश्यन्, सगद्गद च
आश्वासवचांसि व्याहरत्। दावदह्यमाने वने वृष्टिरिव यत्र यत्राय समचरत्तत्र
तत्र परस्परद्वेष शममगच्छत्। सौहार्दसम्यानि च प्रादुरभूवन्। यथाशक्तिरश्रि-
बाधिकाना जनानामश्रूणि प्रमार्जनीयानीति सकल्प्य ७८ वर्षीय जराजर्जर-
गात्रोऽपि महात्मा क्लेशमविगणय्य, कलहविनष्टानि बहुनि स्थानानि जगाम।
शान्तिदूतस्यास्य सचारस्तत्र तत्र विश्वासमतति ततान। किन्तु तदैव पश्चिम-
पाकिस्ताने ततोऽपि क्रूरतर जातिकलहा व्यजृम्भत। लक्षशो जना नष्ट–
सर्वस्वा, अपहृताङ्गना, जीवनरक्षार्थं परित्राण मार्गयमाणा कादिशिका
अभूवन्। ता दशा पश्यन् भारतराष्ट्रपाल 'माउन्टबेटन' नून सत्यमवोचद्
यद्–"दौर्भाग्यादेक एव गांधिः वर्तते। यदि गांधिद्वयमभविष्यत्पश्चिम
पाकिस्तानस्यापि कलहाग्निरशमिष्यत् इति। एवमेकत्र शताब्देभ्य १र
स्वातन्त्र्यलाभादानन्दस्यातिशय प्रपेदिरे भारतीया, अपरत्र च पाकिस्तानस्य
मुस्लिमेतरे परमा यातनामापद्यन्त। एकत्र महासभानेतार शासकपदा-
न्यवाप्य हर्षतुन्दिला अभूवन्, अन्यत्र च भारतस्वातन्त्र्यविधाता गांधि
दुःखाब्धिमग्नानामुद्धरणाय, अश्रुप्रोञ्छनाय च स्थानात् स्थान विकलविकल
धावति स्म। अहो दैवगति।

## शठे साधुत्वकारिता

पाकिस्तानशासकै काश्मीरराज्य बलाद्गृहीतु पूर्वं प्रच्छन्न परस्ताच्च
प्रकटमाक्रमण विहितम्। तत्र शतशो विरोधिनो मुस्लिमा, हिन्दव, ख्रिस्ता,
सिक्खा शाला-औषधालयसचालिका साध्व्य, पशुमार मारिता। ग्रामा
लुण्ठिता, स्त्रियोऽपहृता, मन्दिराणि भूमिसात्कृतानि धनान्यपवाहितानि,
अन्ये चावर्ण्या उपद्रवा अनुष्ठिता। विपण्णस्य काश्मीरराजस्य प्रार्थनया
तत्प्रदेश भारत मयाज्य, सरदारपटेलनिर्देशेन भारतसैन्य काश्मीररक्षार्थं
प्रैषयद् भारतशासनम्। महात्माऽपि तत्सैन्यप्रेषणमन्वमोदत। आततायि-
नश्च 'हा हता!' इति व्याकुलिता, सिंहेभ्य शृगाला इव काश्मीरात्
परागता बभूवु।

भारतशासनेन पाकिस्तानाय ५५ कोटिरूप्यकाणि दातव्यान्यासन्। पाकिस्तानोऽपि भारताय द्विशत कोटीना धारयति स्म। स्वीय धनमदत्त्वा काश्मीरे चोपद्रव कुर्वते पाकिस्तानाय, भारतशासनेन देय धन न दातव्यमिति निश्चित शासकै। नाय निर्णयोऽरोचत महात्मने। "न वय तान् दौःशील्य स्पर्धितुमर्हामि। अस्माभिर्देय धन अनाकलय्य परस्य दुर्व्यवहार देयमेव"। इत्युदघोषयत महात्मा। तदर्थञ्चानशनव्रतमप्यन्वतिष्ठत्। येन भारत शासनमनिच्छदपि ददौ पाकिस्तानाय देय धनराशिम्। "कुटिले साधुकारित्व मिद कुटिलस्य कौटिल्यवृद्धये एव कल्पते। देशस्य चास्य हानि कुर्याद्" इति अमन्यन्त बहव। निन्दन्ति स्म च ते गाधिनोऽध्यवसायमिमम्।

पाकिस्तानसाधुकारित्वेन कुपित कश्चित् महात्मनो प्राणानपहरेदिति सशयोऽभवत् शासकानाम्। प्रतिदिन विना सकोच सर्वत्र सचरति महात्मा। तस्य प्रार्थनासभासु च सहस्रशो जना समन्वयन्ति। अत हिंसाकमस्य प्रतिरोधो दु शक। अस्या स्थितौ एकदा गृहामात्येन सरदारवल्लभभाई पटेलेन प्रार्थिता महात्मा– बापु[1] भवता प्राणा सशये वर्तन्ते। अतो भवत्सभाया समागच्छता नियन्त्रण युक्तरूपमाकलयाम। किंवा भवानत्र मन्यते?।" तत्क्षणमेवा त्तरित परमात्मशरणेन प्राणनिरपेक्षेण महात्मना – 'नाह मत्सभायामागन्तु कस्य प्रतिरोध सहिष्ये। पुनश्च किञ्चिद्विरम्योक्तम्– किमिति मया स्वप्राणाना चिन्ता कर्तव्या? येन ते दत्ता, अद्यावधि च परिरक्षिता, स एव तत्र नियामक। यावत्स अभिलषति जीविष्यामि। यदि स मज्जीवनमधिक मा भूदिति कलयति भवतु तत्तथा। सर्वं खलु ईश्वरेच्छायात्तम्"। इति।

## महानिर्वाणम्

अथैकदा स्वकुटिरात् साय प्रार्थनासभामागन्तु निश्चक्राम महात्मा। बालिकाद्वयस्य स्कन्धयोर्हस्तौ निधाय स्वभावशीघ्रगत्या प्रणमतो जनान् शिर - कम्पन प्रतिप्रणमन्नायाति स्म। मध्य एव कश्चिद् युवा जनान्तराण्यपसार्य सवग सम्मुखमायात। स सभूमिस्पर्श प्रणनाम। अगृहीच्च वस्त्रान्तर्वर्तिन

भुशुण्डिम्। निमेषकल्पित एव च समये, अन्यैरुपरोधं परिहरन्, तिस्रः गुलिका अक्रममिव व्यसृजद् महात्मनो वक्षसि। ताभिः भृशं विद्धः बालस्मितो महात्मा "हा राम!" इति वदन् भूमौ पपात। किमेतदिति विचारयितुमप्यक्षमा जना. तूर्णमेव तत्र परापतन्। अन्तश्चेननं महात्मानम् उज्जीवयितुं तूर्णमायातै. भिषक्प्रवरै. कृता उपाया निष्फला अभूवन्। लक्षशो जनाः अश्रुभिस्तमर्घ्यमर्पयन्तः ग्रहग्रस्ता इव विचारविमूढा अतिष्ठन्।

समनन्तरक्षण एव सकलमेव विश्व विद्युत्पातमिव महात्मनिर्वाणमश्रृणोत्। वर्षसहस्रेषु कदाचिदेव यादृश. पुरुषश्रेष्ठस्य भवत्यवतार. तादृशोऽयं भारतभाग्यविधाता भारतपुत्रेणैव लोकान्तरं प्रेषित.। भारतीया जनता नेतारश्च महादीपस्यास्य निर्वाणेन गाढे शोकान्धकारे निमग्ना अभूवन्। अखिलं जगच्च सर्वसमस्य पुरुषोत्तमस्यास्य गुणगणान् सगद्‌गद सस्मार।

अस्यान्तिमाया देहयात्राणा विंशतिलक्षप्राया मनुजा समन्विता अभूवन्। देशाद् देशान्तरेभ्यश्च सहस्रशो समागतैर्जनै. व्याकुलिताऽभवद्देहली नाम्नी भारतराजधानी। नेहरु· अवदत्–"अस्माकं पथप्रकाशको महादीपो निर्वाण गत.। सर्वत्र निबिड तमः प्रसृतम्। एतेन वन्दिताया भूमौ वय चराम इति नूनम् अस्मान् भाग्यवतो मस्यन्ते भाविप्रजाः॥" इति।

"युगस्यास्य पुरुषश्रेष्ठो चिरनिद्रा लब्धवानि"ति अभणद् आङ्ग्लनरपति.।

इमं शत्रु कलयन्तोऽप्यस्य विलये प्रशसापरायणा बभूवु.।

"एतादृक् शरीरपञ्जरबद्धो भद्रात्मा कदाचिदिमा धरित्री अक्राम्यदित्यपि न विश्वासमुपगमिष्यति भाविनो जनता" इत्यभाषत विज्ञानिश्रेष्ठ आईन्स्टाइन्।



# कस्तुरबा गांधिः

भारतीय सस्कृति "स्त्रिय शक्तिरूपाम्" मन्यते। विना पार्वतीरूपां शक्त शिवो न किमपि कर्तुं शक्नोति। नारायणोऽपि लक्ष्मीयुक्त एव पूजा प्राप्नोति। रामनाम्न पूर्वं सीता कृष्णनाम्नश्च पूर्वं राधा–इति च कीर्त्यते। स्त्री एव पुरुषस्य शक्ति इति विश्वास एवात्र कारणम्।

महात्मा गांधि सर्वत्र सम्मान्यते। स हि त्यागी, कर्मयोगी, सुशील, सन्मार्गदर्शक, सदाचारप्रवर्तक, भारतस्वातन्त्र्यस्य आहर्ता, धर्मधुरधर, दरिद्राणामाश्रय, स्वाश्रयस्य निदर्शनम्–इति तस्यानेके गुणा गीयन्ते। किन्तु, महात्मन एत सर्वेऽपि गुणा कस्तुरबामुपजीव्यैव विकास विस्तार च प्राप्नुवन् इति वस्तुस्थिति। सा किल भारतीयसतीना आदर्शरूपा आसीत्। सर्वात्मना पत्यु पुण्ये कर्मणि आत्मनो याजनमित्यासीत् तस्या जीवनोद्देश्यम्। भारतीया नामन्यायप्रयुक्त दु ख दूरीकर्तुं यदा गांधि आफ्रिकादेशे कारावास प्रविवेश तदा सापि तमनुससार। जन्मता वैष्णवाना परपराप्राप्त आचारमनुसरन्ती अपि सा पत्युरादेशेन सहर्षम् अन्त्यजाना स्पर्श सेवा च अङ्गीकृतवती। न कवल तदेव अपि त्वनारत रुग्णाना दु खितानाञ्च सेवायामात्मान सुखिनममन्यत।

आभूषणप्रिया नार्य इति लोकप्रसिद्धि। आफ्रिकादेशे अन्यै सेवातुष्टै उपहृतानि आभरणानि स्वीकर्तुं सा मना दधे। परन्तु 'नैतदस्मदीयम्, एतत् किन्तु प्रजासेवार्थं प्रकल्पित धनम्' इति पतिना प्रबोधिता सा सहर्षं पत्युरादेश शिरसि अधारयत्। प्रत्यार्पयच्च धन लोककल्याणाय। अहो! पतिनिष्ठा।

आ प्रात आ च मध्यरात्रि, कस्तुरबा गांधि द्रष्टुमागतानाम् आश्रम वासिना च सत्कारपरायणा अवर्तत। पतिना निर्दिष्ट सर्वमपि कार्यं सा ईश्वर-सेवाभावेन अन्वतिष्ठत्।

सा हि शालामहाशालासु लभ्या शिक्षा नान्वभवत्। तथापि रामायणादि-ग्रथरत्नानि पठित्वा सुबुद्धा विनयवती प्रज्ञावती च अभवत्। शील मेवा पर-मेश्वरपरायणता च सा विद्याफलमकल्पयत्। धैर्येण, आर्जवेन सेवया, साहसेन, एव सर्वात्मना सा साहसैकर्मात पतिम्, अनुससार। पतिप्राणा च सा र्हर्निश पत्यु तदनुयायिना च स्वास्थ्याय श्रेयसे च बद्धपरिकरा बभूव। ल्पशिक्षितापि समये समये पत्यु परामर्शदात्री मन्त्रिरूपा चावर्तत। सीतेव ापि पत्यु अनुचितामाज्ञा मृदुभिर्वचोभि प्रतिचकार। सयमे तु नून स त्युरपि गुरुपदम् अवाप। अथापि निर्भीक स्वातत्र्ययज्ञस्य यजमानस्य पत्यु समेव कारागारादियातना असहत। 'भारत परित्यजत' इति गर्जनेन सह राष्ट्रस्वातत्र्याय प्रारब्धे युद्धयज्ञे, राष्ट्रनायकेन पतिना सह सापि कारागार-मङ्गीचकार। तत्रैव च कारागारे, चिर श्रान्तेव विश्रामकाक्षया इव, पत्यु क्रोडे शिरो निधाय, सतीगणसेवित पुण्य लोकान्तर जगाम। "नून सौभाग्यवती एव लोकान्तर जिगमिषामि" इति बहुश प्रकाशितोऽस्या मनोरथ सफली बभूव। को नु खलु सतीसकल्पम् अन्यथयितु प्रभवति ?

वस्तुवा हि सीतासावित्रीपङ्क्तिं प्राविशत्। तथैव गाधिमहात्मा तदभ्यादेव धर्ममूर्तिर्भवितु शशाक। सत्यमेवेद भणित महाभारते।

> **यदा धर्मश्च भार्या च परस्परवशानुगौ।**
> **तदा धर्मार्थकामाना त्रयाणामपि संगम ।।**

सा वै महात्मनो दैवकृत सखा, कुशलकारि मित्र च अवर्तत। तामन्तरा न महात्मा तादृश साफल्य यशश्च अलभ्यत। सतीना पुण्यनामानि एव सकीर्त्यन्ते –

> **अहिल्या द्रौपदी सीता तारा मदोदरी तथा।**
> **पञ्चक ना स्मरेन्नित्यं महापातकनाशनम् ।।**

अस्य द्वितीया पङ्क्ति एव पठितु योग्या प्रतीयते –

> **अहिल्या द्रौपदी सीता तारा मदोदरी तथा।**
> **कस्तूरीसहित षट्क सतीना पापनाशनम् ।।**



# महायोगी श्रीअरविंदः

**योरोपे कृतविद्योऽपि आर्यसंस्कृतिभक्तिमान्।**
**योगिराडरविन्दोयं विश्ववन्द्यो विराजते ॥**

को नु ज्ञातुं शक्नोति विधेर्वक्रताम्। कर्दमात् कमलं, पृथिवीगर्भाच्च महार्माणि सृजत सृष्टुर्विचित्रैव सर्जनलीला। भारतीयाद् धर्माद् तज्जीवन-प्रणाल्याश्च सुतरामुद्विग्नस्य पाश्चात्यजीवनपद्धतिञ्च सर्वात्मनाऽऽश्लिष्टस्य कृष्णधनस्य पुत्रो भारतीयचेतनाया, भारतीयवाङ्मयस्य, जीवनदृष्टेश्च परमाराधको योगेश्वरो भवेदिति को नु तदा कलयितुं क्षमेत। हन्त! तदेव सवृत्तम्।

बगदेशीय श्रीकृष्णधन स्वर्णलतानाम्नी विदुषी ब्रह्मसमाजनिर्दिष्टेन पर्यावाह। कृष्णधन पाश्चात्यभैषज्ये पारदृश्वा सुवर्णलता च विदुषी लेखिका आसीत्। दम्पत्योरनयो चत्वार सुता सरोजिनी नाम्नी सुता चेति पञ्चा-त्मजा अभूवन्। तेषु तृतीय आसीद् योगिप्रवरः अरविंदः।

श्री अरविंद १८७२ ख्रिस्ताब्दस्य अगस्तमासस्य १५ तमाया तिथावा-विर्बभूव। मा भूमे सततिर्भारतीयकुसस्कारकलुषितेति कलयन् पिता पञ्चवर्षदेशीय त भ्रातृभ्या सह दार्जिलिगस्थित 'लोरेटो कॉन्वेन्ट' नाम पाश्चात्यसस्काराधाम विद्यार्जनाय प्रावेशयत्। तत्रैव जाता बालोऽरविंद स्वप्नानुभूतिमिमामचकथत्—"गुप्त मामन्ध तम आक्रम्य सर्वात्मनान्तर्बहिर्व्याप्य स्थितमभूत्। तम इद तदन्वाङ्गलदेशे वसन्नप्यहं भूयोभूयोऽन्वभवम्"। इति।

सप्तवर्षस्केऽरविंदे पिता सपरिवार आङ्ग्लदेश जगाम। उषित्वा च तत्र कचन काल त्रीन् ज्येष्ठपुत्रान् तत्रैवाध्ययनाय विसृज्य भारत प्रत्यायात। अरविंदस्तत्र कचन काल विद्यालयप्रवेशमन्तरा गृह एवाध्यापित आसीत्।

तदा भारते शासनोच्चपदेषु नियुक्त्यै आङ्ग्लदेश गत्वा आई सी एस् नाम्नी परीक्षा उत्तारणीयाऽऽसीत्। असाधारणमेधावान्, प्रत्युत्पन्नमति, बहुज्ञ, दृढशरीरश्च जनस्ता पदवी लब्धु शशाक। श्री अरविंद १८९० ख्रिस्ताब्दे ता परीक्षा दातुमनुमताऽभवत्। तदर्थमावश्यक ग्रीक-लेटिन-भाषयोर्ज्ञानमेतस्य सुदृढमवर्तत। आङ्ग्लफ्रासदेशयारितिहामस्य च पारदृश्वाऽऽस्य योरोपीयविकासरहस्यस्य सुपरिचित आसीत्। योरोपस्येतरदेशाना भाषास्वप्ययमलभत पारगतनाम्। तद्बलेनैव च स्नातकपदवीमलप्स्यत किन्तु न स तल्लाभायास्पृह्यत। स हि आई सी एस् परीक्षायै लेखपरीक्षामपारयत्। अश्वारोहणपरीक्षाया उत्तरणमात्रेणैव स भारत उच्चै पद लब्धु शक्तोऽभविष्यत्। किन्तु विदेशशासनस्य भृत्या स पारतन्त्र्यरज्ज्वा दृढीकरणममन्यत। अता न तामकामयत। अथ च द्वादशकृत्वोऽश्वारोहणपरीक्षायैमाहूतोऽपि स न जगाम नापि पत्रोत्तरमप्ययच्छत्।

आङ्ग्लदेशे निवसन्नेवारविंद आङ्ग्ल-फ्रेंचभाषाभ्या काव्यान्यरचयत्। तत्रत्याना रचनाना सग्रहरूप च 'Songs to Myrtilla' नाम पुस्तक बटपुरमागतेन पश्चात् प्रकाशितमभूत्।

श्रीकृष्णधन पुत्रस्य पुनरागमनाय सुतरामस्पृह्यत। प्रमादात्तेन ज्ञात यद् यया नावा श्री अरविंद आगच्छन्नासीत् सा समुद्रेऽमज्जत। एतद्वार्तया हृतमर्मा कृष्णधन श्री अरविंदस्यागमनात्पूर्वमेव पञ्चत्व गत। पिताऽरविन्दस्योज्ज्वला कीर्तिमाशास्त स्म। स्यालाय योगीन्द्राय लिखिते पत्रे तेन न्यवेदि यत् "ममारविंद तेजस्विना स्वशासनकर्मणा राष्ट्रस्य गौरव प्रचेष्यति" इति। सिद्धुरियमाशा किन्तु शतकृत्व सफलाऽभवत् किन्तु न शासनकर्मपाटवेन, अपि तु अरविंदस्य योगस्योच्चै शिखरमारूढतया।

श्री अरविंद चिरादेव भारत प्रत्यागन्तु प्रबलामुत्कठा दधार। यदा स नावा मुंबापुरीमवातरत् तदाऽपूर्वमिव शान्तिमन्वभवत्। कान्चिदवर्णनीया माध्यात्मिकी तृप्तिमवाप। बाल्ये वयसि या प्रगाढा तमव्याप्तिरनुभूता सा पुनर्देशागत न कदापि तमस्पृशत्।

आङ्ग्लदेशे निवसन्नेवारविंद पित्रा प्रेषितैः पत्रखण्डैर्भारते प्रवर्तमाना माङ्ग्लाना शासनप्रणालि विदाञ्चकार। बाल्य एव च स न केवल भारतेऽपि तु सर्वत्र नवीनैव विचारक्रान्तिरुदेष्यतीति विभावयामास स्वयञ्च तत्र निश्चित कार्यं वर्तुं बद्धकटिरभवत। तरुणेन तेन केम्ब्रिजविश्वविद्यालयस्य भारतीय च्छात्रसभासु जगत्क्रांति भारतीयस्वतन्त्रताञ्चाश्रित्योग्राणि व्याख्यानानि चक्रिरे। अस्यानुपमा प्रज्ञा, क्रांतिकाङ्क्षिणी विद्योतमाना भावनाञ्चोत्ते ध्याङ्ग्लशासन न तमुच्चपदवीयोग्यमकलयद्, यद्यप्यतादृशा केचन अनुत्ती र्णापि आई सी एस परीक्षा, पदवीदानेन सभाजिता अभूवन्।

भारतागमनात् पूर्वं श्रीअरविंदेन क्रांतिप्रियाणा कमल कृपाणश्च' इति नाम्ना ख्यातस्य मडलस्य सभाया सनिहितमभूत्। यद्यपि नेद मण्डल किमपि गणनीय कार्यं चकार-अथापि श्रीअरविंदस्तत्र स्वदेशसेवार्थं कृता प्रतिज्ञा भारतमागत्य बहुधा सफलीचकार। स भारतभूमिं पदा स्पृशन्नेव तस्या सेवायामायु क्षपयितु व्रत दधार।

वगभाषा सम्यक् परिचायित । अथापि आङ्गलभाषयैव न स कदापि वग-भाषया सौकर्येण व्यवाहरत्। तस्य वगशिक्षक श्री दीनेन्द्रकुमारस्तमाश्रि-त्यालिखत् "श्री अरविंद न कदापि स्वविषये किमप्यभाषत। ज्ञानार्जनमेव परम कार्यममन्यत"।

वटपुरे स स्वयमेव महाविद्यालयेऽध्यापनकार्यमवृणुत। तत्र च स पूर्वं फ्रैंचभाषा ततश्चाङ्गलभाषामध्यापयामास। तत्रोपप्रधानाचार्यपद निर्वहन्नपि स तदातदा श्रीसयाजीरावस्य सहायता व्यतनोत्। महाराज श्री अरविंदस्य विचारविभवेन, विमर्शसामर्थ्येनाङ्गलभाषाप्रभुत्वेन च सुप्रभावित आसीदतो विशिष्टपत्रादिरचनाया त साह्यमयाचत।

एकदा सयाजीराव श्री अरविंदरचितमतिगभीर पत्र सरलीकर्तुं त न्यवदेयदवोचच्च यद् "एतादृश पत्र न कोऽपि मदीय कलयेदतस्तद् मदीयता-प्रतीतियोग्य क्रियता"मिति। तत्क्षणमेवारविंदोऽभाषत "सरलीकृतेऽपि पत्रे जना विदन्त्येव यद्भवानन्यै पत्रान् लेखयति" इति।

एकदा महाराजेन सह काश्मीरदेश जगाम श्रीअरविंद । तत्र शकराचार्य टेकरीति नाम्ना प्रसिद्ध स्थलमुपगम्यामन्दा शान्तिमनिर्वचनीयामाध्यात्मिकी स्फूर्ति चाविन्दत्। अनुभवमिम स आजीवन सगौरव भावुकेन चेतसा स्मरति स्म।

श्री अरविंदो विदेशात्साक्षादेव गुर्जरभुवमागत्य वटपुरे ११ वर्षाणि उवास। तदन्वेव स जन्मभूमि वगप्रदेश जगाम। तत्र च मातुः स्वसार, मातर चाभिरत्। बाल्य एव दृष्टवती माता युवान त पुनरागत परिचेतुमप्य-समर्थाऽऽसीत्। शैशवप्राप्तेन व्रणचिह्नेनैव च सहसैव सा 'सोऽयमेव मेऽरविंद' इति च प्रत्यभिज्ञानमलभत। तेषु दिनेषु मुबापुरीत प्रकाश्यमाने 'इन्दुप्रकाश' नाम्नि मासिकपत्रे लेखद्वय प्रकाश्य, तदात्वे राष्ट्रियमहासभयाऽङ्गीकृता मृद्वी राजनीति कटु पर्यालोचयद् येन रुष्ट श्रीरानडे तत्पत्रिकाप्रकाशक 'नैतादृशा लेखा प्रकाशनीया नो चेत्कारागार एव ते प्रवेशो भवे' दितिज्ञाप-यामास।

श्री अरविंद चिरादेव भारत प्रत्यागन्तु प्रबलामुत्कठा दधार। यदा स नावा मुबापुरीमवातरत् तदाऽपूर्वमिव शान्तिमन्वभवत्। काञ्चिदवर्णनीया माध्यात्मिकी तृप्तिमवाप। बाल्ये वयसि या प्रगाढा तमोव्याप्तिरनुभूता सा पुनर्देशागत न कदापि तमस्पृशत्।

आङ्ग्लदेशे निवसन्नेवारविंद पित्रा प्रेषितै पत्रखण्डैर्भारते प्रवर्तमाना माङ्ग्लाना शासनप्रणालि विदाञ्चकार। बाल्य एव च स न केवल भारतेऽपि तु सर्वत्र नवीनैव विचारक्रातिरुदेष्यतीति विभावयामास, स्वयञ्च तत्र निश्चित कार्यं कर्तुं बद्धकटिरभवत्। तरुणेन तेन केम्ब्रिजविश्वविद्यालयस्य भारतीयच्छात्रसभासु जगत्क्राति भारतीयस्वतन्त्रताञ्चाश्रित्योग्राणि व्याख्यानानि चक्रिरे। अस्यानुपमा प्रज्ञा, क्रातिकाक्षिणी विद्योतमाना भावनाञ्चोत्प्रेक्ष्याङ्ग्लशासन न तमुच्चपदवीयोग्यमकलयद्, यद्यप्यतादृशा केचन अनुत्तीर्णापि आई सी एस् परीक्षा, पदवीदानेन सभाजिता अभूवन्।

भारतागमनात् पूर्वं श्रीअरविंदेन क्रातिप्रियाणा 'कमल कृपाणश्च' इति नाम्ना ख्यातस्य मडलस्य सभाया सन्निहितमभूत्। यद्यपि नेद मण्डल किमपि गणनीय कार्यं चकार-अथापि श्रीअरविंदस्तत्र स्वदेशसेवार्यं धृता प्रतिज्ञा भारतमागत्य बहुधा सफलीचकार। स भारतभूमि पदा स्पृशन्नेव तस्या सेवायामायु क्षपयितु व्रत दधार।

आङ्ग्लदेशे वसन्नेव श्री अरविंदो वटपुरनृपते श्री सयाजीराव महाराजस्य परिचयमवाप। प्रथमदर्शनादेव तीव्रमेधस्यारविंदस्य स्वराज्ये नियोगाय नि सकोच निरचिनोत् सयाजीराव। प्रतिमास द्विशतरुप्यकात्मक वेतन ददान च सयाजीराव 'एतावता अल्पेन वेतनेनैव मया महाप्रवीण. कर्मकरो लब्ध' इत्यसकृत् स्वान् ख्यापयामास।

तत्र च वटपुरे श्री अरविंद. १८९३ ख्रिस्ताब्दस्य फेब्रुवारी मासत १३ वर्षाणि यावत् शासनमसेवत। तत्रैव च वसता केनचिद् बगीयेन यूना स

भाषा सम्यक् परिचायित । अथापि आङ्ग्लभाषयैव न स कदापि बंग-
भाषया सौकर्येण व्यवाहरत् । तस्य बंगशिक्षक श्री दीनेन्द्रकुमारस्तमाधि-
अलिखत् "श्री अरविंद न कदापि स्वविषये किमप्यभाषत । ज्ञानार्जनमेव
परम कार्यममन्यत" ।

वटपुरे स स्वयमेव महाविद्यालयेऽध्यापनकार्यमवृणुत । तत्र च स पूर्वं
फ्रेंचभाषा ततश्चाङ्ग्लभाषामध्यापयामास । तत्रापप्रधानाचार्यपद निर्वहन्नपि
स तदानदा श्रीसयाजीरावस्य सहायता व्यतनोत् । महाराज श्री अरविंदस्य
विचारविभवेन, विमर्शसामर्थ्येनाङ्ग्लभाषाप्रभुत्वेन च सुप्रभावित आसीदतो
विशिष्टपत्रादिरचनाया त साह्यमयाचत ।

एकदा सयाजीराव श्री अरविंदरचितमतिगभीर पत्र सरलीकर्तुं त
न्यवदयदवाचच्च यद् "एतादृश पत्र न कोऽपि मदीय अनयेदतस्तद् मदीयता-
प्रतीतिनियाम्य क्रियता"मिति । तत्क्षणमेवारविंदोऽभाषत "सरलीकृतेऽपि पत्रे
जना विदन्त्येव यद्भवानन्यैः पत्रान् लेखयति" इति ।

एकदा महाराजेन सह काश्मीरदेश जगाम श्रीअरविंद । तत्र शकराचार्य
टेकरीति नाम्ना प्रसिद्ध स्थलमुपगम्यामन्दा शान्तिमनिर्वचनीयामाध्यात्मिकी
स्फूर्ति चाविन्दत् । अनुभवमिम स आजीवन सगौरव भावुकेन चेतसा
स्मरति स्म ।

श्री अरविंदो विदेशात्साक्षादेव गुर्जरभुवमागत्य वटपुरे ११ वर्षाणि
उवास । तदन्वेव स जन्मभूमिं बंगप्रदेश जगाम । तत्र च मातु स्वसार, मातर
चामिलत् । बाल्य एव दृष्टवती माता युवान त पुनरागत परिचेतुमप्य-
समर्थाऽभूत् । शैशवप्राप्तन व्रणचिह्नेनैव च सहसैव सा 'साऽयमेव मेऽरविंद'
इति च प्रत्यभिज्ञानमलभत । तेषु दिनेषु मुंबापुरीत प्रकाश्यमाने 'इन्दुप्रकाश'
नाम्नि मासिकपत्रे लेखद्वय प्रकाश्य, तदात्वे राष्ट्रियमहासभयाऽङ्गीकृता
मृद्वीं राजनीतिं कटु पर्यालोचयद् येन रुष्ट श्रीरानडे तत्पत्रिकाप्रकाशक
"नैतादृशा लेखा प्रकाशनीया नो चेत्कारागार एव ते प्रवेशो भवे' दितिनाप-
यामास ।

श्री अरविंदो न कदापि लोकख्यातये प्रायतत। सर्वमपि राष्ट्रकार्यं तूष्णीमेव समपादयत्। धनामक्तिर्नं तमस्पृशत्। वेतनाद्धनमप्रच्छन्नमेव सर्वस्थलेऽस्थापयत्। धनसञ्चयायान्यैरुपदिष्टः सोऽभाषत – "परमेश्वरो य आवश्यकं धनमर्पयत्येव स एव मे योगक्षेमं चिन्तयिष्यति, किमिति मुधा परितप्येयमि"ति। तस्य मित्रं तद्विषयेऽलिखत् "श्री अरविंदो न पार्थिवो जनः, अपि तु नूनं शापभ्रष्टा देवता"।

श्री अरविंद 'भवानीमंदिरम्' इति नाम्ना पत्रिकामेकां प्राकाशयत्। तत्र च स राष्ट्रसेवा-अध्यात्मसाधनयोः सामंजस्यमुपादिशत्। हिंदमातुर्मन्दिरं परिकल्प्य, तत्परितो राष्ट्रसेवाव्रतिनां सघमेकमारचयितुं च मनोरथानाविश्चकार। स हि भवानीस्वरूपमेवमवर्णयत्–"अनन्तपरिवर्तनशीलं विश्वचक्रमनारतं प्रचण्डवेगेन विवर्तमानं वर्तते। तद्द्वारा चाविर्भवन्ती परमशक्तिः विविधयुगेषु जनगणान् यथेच्छं विविधक्रियासु योजयति, तेन च स्वेष्टं साधयति। इयमनन्तरूपा शक्तिरेव प्रेम-ज्ञान-त्यागरूपाणि धत्ते। सैव च कदाचित् करालं कालिरूपम् अनन्तशक्तिं भवानीरूपं, मधुरमूर्तिं राधारूपञ्चादधाति। इयमेव नो जननी, इयमेव च विश्वधारिणी विद्यते"। इति।

१९०१ ख्रिस्ताब्दस्यैप्रिलमासे श्री अरविंदो मृणालिनी नाम्नीं बोसकुलोत्पन्नां रमणीमुपयेमे। पुनश्च पत्न्या भगिन्या च सहितो नैनिताल गत्वा वटपुरं प्रत्यागतः।

१९०४ ख्रिस्ताब्दे श्री अरविंदो नर्मदोपकण्ठे स्थितं चाणोदतीर्थमगमत्। तत्र च देवधरनाम्ना योगविशारदेनोपदिष्टः प्राणायामस्य बुद्धिशोधकताम बोधत। सोऽलिखत्–"पूर्वमहं पञ्चषा एव काव्यपङ्क्तीर्लिखितुं प्राभवम्। प्राणायामप्राप्तबलश्चाद्यत्वे घण्टार्धेनैव द्विशतं पङ्क्तीर्लीलयैव लिखामि। प्राणायामाभ्यासेन स्मृतिर्मे सन्धुक्षिता भवति। स्वतोऽहमहमिकया परापतन्तीश्च काव्यपङ्क्तीः स्मृतिपथमारोप्य यथावकाशं पत्रारूढाः करोमि। मनश्च मे विसारिणा विद्युच्चक्रेण द्योतमानमिव भवति"। इति।

तदातदा वगप्रदेशं गच्छत श्री अरविंदस्य तत्रत्यैं स्वातत्र्यसेविभि परिचय प्रगाढता प्राप। वटपुरे राज्यायत्ते महाविद्यालये प्रधानाचार्यपद वहतोऽस्य राजकीयप्रवृत्तिपु निर्बन्ध प्रवेशो नासीत्, किन्तु क्रातिवीरैं सभूय कार्यकरणे स उत्कमना बभूव। आत्मचिन्तनेन, योगसाधनया चाभयादि-दैवीमपदोऽस्य प्रचीयमाना आसन्। इग्लैंडवासकाले न सत्यादिसेवने तस्या-भिनिवेशोऽभवत्। स स्वयमलिखत्–"नाह तदा सत्यमावश्यकमकल्पयम्। यभीतस्य मम तदा शूलारोहणादिदडकल्पनापि कपायाजायत। जनसाधा-रणमिव सर्वापि प्राकृतिकी दुर्बलता मामबाधत। किन्तु दिव्यचेतनाया साक्षात्करणात्पूर्वं नैकानि कष्टानि मया सोढव्यान्यासन्"।

श्री अरविंद १९०६ ख्रिस्ताब्दस्य जूनमासे पुन वाणोदतीर्थं जगाम। तत्र च स्थित ब्रह्मानदस्वामिन ददर्श यस्य प्रसादेन तत्रत्यमदिरस्थिता भवानी साक्षादपरोक्षीचकार।

तदनु पुन कालिकत्ता गत्वा 'वदेमातरम्' नाम्ना ख्यातस्य वर्तमानपत्रस्य सपादको बभूव। तस्य पत्रसपादनशक्ति वर्णयन्नेक आग्ल एवमलिखत्–"श्री अरविंदो महान् क्रातिकारी दीप्तिमल्लेखनपटु जनोत्साहदीपनश्च विलक्षणो नेता विद्यते। आग्लभाषाया तस्य प्राभव भारतेऽभूतपूर्वं वर्तते"। सूरतनगरे प्रवर्तिते महासभाधिवेशने श्री अरविंदकार्यं दृष्ट्वा तस्य शिष्योत्तम श्री कनैयालाल मुन्शी अलिखत्–"श्री अरविंदस्य लेखनी तद्वाच प्रभावेणातिशेते" इति।

एतदनु स्वल्पसमयाय वटपुरगतस्य श्री अरविंदस्य श्री विष्णुभास्कर लेले नाम्ना योगिना परिचय सवृत्त। तेन सहासौ दिनत्रयमेकान्तवास स्वीचकार। योगसाधन प्रकुर्वाणश्च मनो निष्पद विचारशून्य च स्थापयितु शशाक। मुक्तिलभ्यञ्चानन्दमनुबभूव। तस्य तादृशमाध्यात्मिक प्रकर्षं विभाव्य श्री लेले त स्वमेव गुरूकर्तुं न्यवेदयत्।

एकदा मुबापुर्यां सभायामेकत्र व्याख्यातु निमत्रितोऽभूत् श्री अरविंद। तदा किम् वक्तव्यमिति निश्चेतुमपारयन् स विमूढमतिर्बभूव। किन्तु श्री

लेलेनिर्देशेन नारायणस्मरणपूर्वकमारब्धं तद् व्याख्यानं सर्वजनाविर्जकमभवत्। योगाभिभूतचेतसैव स 'वंदेमातरम्', 'कर्मयोगिन्' इति पत्रिकाद्वये नैकान् सारिष्ठान् लेखान् लिलेख।

'अलीपूर बंब-अभियोग' संबंधेन श्री अरविंद कारागारं प्रवेशितः। तदभियोगरक्षार्थं तद्भगिन्या धनसंचयाय प्रयतितम्। वगनरसिंह श्री चित्तरंजनदास. तस्य रक्षाभारं जग्राह। श्रीअरविंदस्तु रक्षार्थं कांश्चन विषयान् बोधयितुं प्रावर्तत। किन्तु तदैवान्तर्वाणी उदस्यात्–"अयमेव जनः त्वामधिक्षेपजालात्तारयिष्यति। न स त्वया किंकर्तव्यता वक्तव्य। अहमेव तं यत् कार्यं तद् निर्देक्ष्यामि'। इति। तत्र च कारागारे श्री अरविंदः श्रीमद्भगवद् गीता उपनिषदादीन् ग्रंथानध्यैष्ट। योगसाधनाय च पर्याप्तिमानुकूल्यमलभत। स विषयेऽस्मिन् लिखति–"कारावासारंभे मे मनो भग्नप्रायमभूत्। गतप्राया ऽऽसीन्मे श्रद्धा। मां कारागारे क्षिपता विधिना किन्नु व्यवसितं भवेदिति नाहमशक्नुवमूहितुम्। मास यावदहं निर्जने कोष्ठे बद्ध आसम्। तदा प्रति क्षणमहं परमात्मसंदेशं प्रतीक्षमाणोऽभुवम्। तत्र चैकांतनिवासे इदंप्रथमतयाऽहं परात्मानमपरोक्षतयाऽन्वभवम्। स हि भगवान् मत्करे गीतां निवेशितवान्। गीतारूपा च तच्छक्तिर्मां प्राविशत्'।

"परितो दृष्टिं विसारयन् किं पश्यामि। उत्तुंगा भित्तयो न मे भित्ति रूपेणापि तु वासुदेवरूपेणमभासन्त। स एव भगवान् मां परित आवृत्य तिष्ठति। यस्य वृक्षस्याधस्तादहं संचरामि सोऽपि श्रीकृष्ण एव। स एव मां शीतच्छाय-याऽऽवृणोति। प्रकोष्ठस्य वातायनलोहशलाका अपि वासुदेवरूपा पश्यामि"।

'ततोऽहं न्यायाधिकारिणं समक्षं नीतः। सोऽपि वासुदेव इत्यवा धारयम्" इत्यादि।।

एवमुन्मनोऽवस्थः श्रीअरविंदो यदायदा न्यायाधिकरणमानीयापराधि-पञ्जरं प्रवेशितः तदातदा तत्रैव वासुदेवमय्या दृष्ट्या सर्वमपश्यन्न च किञ्चिदपि कार्यवृत्तमवदधार। तस्य तामवस्थामुत्पश्य सर्वे विस्मयमवापुः किन्तु न तदन्तर्गतां भावस्थितिं विदुः। तत्रैव कारागारे तेन एकादशदिनान्यनशन-

चरितं येन शरीरकार्श्यें समागतेऽपि चेत स्फूर्तिरनुभावविशेषश्च पूर्वापेक्षया-
पचितावभूताम्।

कारावासानुभव श्रीअरविंद एवमवर्णयत् "कारावासे पचदशदिनानि
वत् स्वामी विवेकानंदो मा भूयो भूय उदबोधयत्। तमह पार्श्वस्थितमन्व-
वम्। अध्यात्मसाधनामाश्रित्य चोपयोगिनमुपदेश व्यतनोत्स परिव्राड्वर।
उपदेशसमाप्तौ च पुन विरता अभूवस्तदीया वाच"।

नि शुल्क साह्यप्रवृत्तो वाक्कीलप्रवरो देशबंधुश्चित्तरञ्जन अन्यप्राप्य
प्रचुर धनागममविगणय्य, श्री अरविंदस्य रक्षार्थं भूरि प्रयत्नमकरोत्।
तत्प्रयत्नैश्च श्री अरविंदो निर्दोष इति प्रख्याप्य विमोचितोऽभूत् कारागारात्।

तदनु श्री अरविंदस्य सत्काराय महती सभा आयोज्यत। अयुतसख्या-
कजनपूर्णाया तत्र वाग्मिना तेनाध्यात्म-राष्ट्रियतयो सामजस्यपूर्णं तथा
व्याख्यात यथा श्रोतारो मन्त्रमुग्धा इव तमशृण्वन्। अथ निदेशप्रसूता
भगिनी निवेदिता त शासनस्य भारताद् बहि नि सारणायाध्यवसाय
म्बोधयन्ती अज्ञातस्थिर्तिं कलयितु निदेशयामास।

श्री अरविंदोऽप्यान्तरेण चक्षुपा तदेवानुरूप मेने। तत्समनन्तरमेव मित्र-
मेक-"शासननिर्दिष्टा सैनिकास्त्वत्कार्यालयमुपधावन्ति त्वाञ्च जिघृक्षन्ती"-
ति ममदिशत्। तदैव श्री अरविंद 'पुनश्चन्द्रनगर याहि' इत्यान्तर ध्वनि
शुश्राव। अत. सपद्येव द्वित्रैर्विश्वस्तै सह नावमारुह्य चन्द्रनगरमभिप्रतस्थे।

फ्रेंचशासिते चद्रनगरे स चत्वारिंशद् दिनान्यवात्सीत्। तत्र च 'प्रवर्तक-
संघ' नाम मण्डल निरमायि। तत्रत्यामरविंददशामुपवर्णयन् श्री मोतीलाल-
रायोऽलिखत् "ईश्वरसमर्पितेवासीत् श्री अरविंदमूर्ति। स किन्न रामश्च स्थितं
भाजन शून्यया दृशाऽपश्यत्। यन्त्रवच्च तत् स्पृशन्नपि ध्याननिमग्नेन चक्षुषा
ज्ञानिष्ठ्त। स हि सूक्ष्मात्सूक्ष्मतर एव तत्त्वे निविष्टदृष्टिर्बभौ।

पुरा यदा स अलीपुरकारागारमध्यास्त तदा वगराज्यगान ... ...
अपि तदेवान्वभवत्। स चाश्चर्यमभाषत "समीक्षिता भवता श्री अर ...
दृष्टि: ? सा किल त मत्तान्मत्तमिव प्रमाणयति"।

तदनु श्री अरविंद फ्रांसदेश गच्छत्विति कैश्चिन्मित्रैर्विचारितम्। किन्तु अन्तःस्फुरणा तं पांडीचेरीं गन्तुं प्रेरयति स्म। ततः पूर्वमपि बहुशः स तथैव प्रत्यपद्यत। सोऽलिखत् यत् "राजनीतिकार्यं परित्यजतो मम निश्चयेनाभावन यदारब्धमिदं राष्ट्रकार्यमन्ये निर्वर्तयिष्यन्ति। मम तु योगाराधनैव जीवनकार्यं भवति। राष्ट्रिय स्वातंत्र्यं तु निश्चप्रचम्"। इति।

तदनु पांडिचेरीं प्रस्थाय योगाभ्यासनिरतेन तेन २३ दिनानि निराहार व्यतीतानि। इयं च साधना प्रच्छन्नरूपेव प्रावर्त्यत। पांडिचेरीस्थितस्य श्री अरविंदस्य भारतशासनद्वारा उपद्रवमुद्भावयितुं केचन पिशुनाः प्रावर्तन्त किन्तु न ते तत्र साफल्यमवापुः।

१९१४ खिस्ताब्दे मार्चमासस्य २९ दिने श्री अरविंदस्य माताजीशब्द वाच्यया फ्रैंचनार्या सर्वप्रथमं समागमोऽभवत्। तस्या आग्रहेण च श्री अरविंदः 'आर्य' नाम्नीं मासिकपत्रिकां प्रकाशयितुं निश्चिकाय। मासिकस्या-स्योद्देशं स एवमवर्णयत् "भविष्यत्कालस्य विचारसामग्री प्रचेतुं प्राचीनाना-मुत्तमाशानां च तथा सामञ्जस्यं साधयितुं प्रवर्तिष्यत इयं पत्रिका" इति।

एतेषु दिनेषु अरविंदोऽकिंचनप्राय आसीत्। जीवनयात्रात्यल्पैरेवोप-करणैर्निर्वर्तयते स्म।

तदनु पुनः राजनीतिकार्याय निमन्त्रितः स एवमभणत् – "अत्रागतस्य मे निश्चितं भवत्युद्देश्यम्। अत्र सुलभ एकान्तलाभो नूनं मे तपसोऽनुकूलो भवति। नाहं सामान्यरूपेण योगाराधनं कामये। मनोतीतं सत्यं भूमाववतारयितुं कृतसंकल्पोऽस्मि। कार्यमिदं मे विश्वव्यापि भवति। तथापि भारतभूमि-रेवास्य प्रवर्तनास्थलं भविष्यति"। श्रीमाताजी श्री अरविंदस्य प्रथमदर्शन-मुपलक्ष्यैवमलिखत्–"पतिना सह पांडिचेरीमागताया मम श्री अरविंददर्शना-दद्भुत एव मनोभाव उदस्यात्। यमहं पूर्वं 'कृष्ण' शब्देन व्यवाहरं स एवायमिति प्रथमदर्शनादेवावेदिषम्। अनेन सहैव मे कार्यक्षेत्रमिति च प्रत्यबुध्यम्।"

कस्यचिद् भारतस्वातन्त्र्यकामिन श्री अरविंदेन सहैव सवाद समजनि। स खलु भारत स्वतन्त्र भवेद्वेति सदिहान पप्रच्छ। श्री अरविंदोऽभाषत–

"भारत नूनमचिरादेव स्वतन्त्र भविष्यति"। "का न्वेव प्रत्येतु पारयेद् ?" स पुन पृष्टवान्। "अहमेव तद्विना सकोच प्रतिपादयामि" इत्युक्त्वा किञ्चि द्विरम्य पुनश्चावाच" प्रात सूर्योदयो यथा निश्चित तथैव भारतस्वतन्त्रता निश्चितामवेहि"। श्रुत्वैता विश्वस्तवाणी स योगीश्वरस्य शिष्यता प्रपद।

श्री अरविंदस्तत आदेहविसर्जन १९५० खिस्ताब्द यावदपूर्वां योगसाधना, व्यतानीत्। भारतीय वेदादिवाङ्मय तत्सर्श अवगाह्य गीतानिबधान्, रामायणानुवादम्, वेदमन्त्राणा नवीनदृशा विवेचन, विशिष्य च 'सावित्री' नाम महाकाव्य व्यरचयत्। वर्षे चतुर्वारमेव स बहिरागत्य साधकाना दर्शन-दानमा निरवापयत्। आश्रमकार्य प्राय 'माताजी' एव समपादयत्। सा खलु महायोगिना द्वितीय शरीरमिवाभवत्।

स्वस्य चरितलेखक कञ्चिदुद्दिश्य स प्रत्यपादयत्–"न कोपि म चरित विवरितु पारयति। जनो यथा दृश्यते न तत्स्य तात्त्विक रूपम्। मनुष्य-स्यान्तर्व्यापारान् न कोऽपि वेत्ति। न च स स्वयमपि स्वीयान् सुगुप्तान् भावानवगाहितु पारयति। अवगाह्यापि न स्वान्तर्गत शब्दैराविष्कर्तु प्रभवति। विचित्रा दुरवगाहा च खलु मानवीयाऽन्तश्चेतना"। एवमादि। श्री अरविंदस्य देहपञ्जर चेतनाशून्यमपि दिनत्रय यावदवर्णनीययाऽऽभया परीत कान्तिमच्चावर्तत।

श्री अरविन्देन भारतीययोगस्य महिमा भूरि प्रवर्धित। तस्य सर्वदिशा-गतै शिष्यैर्योगस्यापूर्वाऽनुपमा च शक्तिरनुभूता। श्री अरविन्दप्रचारिता योग पर प्रकर्ष प्राप्ता दिव्या चेतना भूमाववतारयेदित्यासीत्तस्याध्यवसाय। अतिप्रगल्भाभी रचनाभिर्विषयोऽय तेनासन्दिग्धमसकृत् प्रकाशित। कथ-मेतद्भवेदिति तु परमेश्वर एव जानाति।

अद्य भारते विदेशेषु च सहस्रशो जना श्री अरविन्ददर्शिन मार्गमनुसर्तु प्रयतन्ते। तस्य प्राणवत्साहित्य च सम्मिल्य सबहुमान चिन्तयन्ति। नूनमनेन पुरुषर्षभेण भारतसस्कृति सर्वदिक्षु गौरवमापादिता।

पाडिचेरीस्थे तदीये भव्ये आश्रमे, तद्देहसमाधि विरच्य, तदुपरि वेदिरेका निर्मिताऽस्ते। तत्र चैते शब्दा उट्टङ्किता सन्ति –

"अस्मद्गुरो पार्थिवावरणभूताय देहाय वय सुतरा कृतज्ञा वर्तामहे। अस्मदर्थं भूरि यतमानाय, यातना च सोढवते तस्मै वयमनेकश प्रणमाम। प्रतिपल च तदृणभार स्मराम"। इति।

अद्यापि श्रीमाताजीमार्गदर्शने उपपञ्चशत साधकास्तत्राश्रमे ध्यान चिन्तनाऽध्यापनादिकार्यजातानि निर्वर्तयन्ते। (एतत्प्रकाशनात् पूर्वमेव माताजी परमचेतना प्राप्ता)

अपूर्वमिदमाश्रमपदम्। भौतिकसपत्तिराशीन् विहाय विश्वतो नैके विचक्षणा अत्रागत्य लौकिकसेवाकार्ये व्यापृता आध्यात्मकी शान्ति, ध्यानसाध्या समाहितावस्था चानुभवितु प्रयतन्त। वृक्षराजिपरिशोभिते, नागरिकविक्षोभशून्ये चात्र स्थानेऽध्यापनमदिराणि प्रवर्त्यन्ते। गृहोद्योगैश्च परितो वसता दीन-जनानामुद्योगलाभ सपाद्यते। प्राचीनार्वाचीनयुगयो, आश्रमबनगर-सस्कृत्योश्चात्र सुभग सङ्गम आलक्ष्यते।





# स्वामी रामतीर्थः

सम्राजं सर्वलोकानामात्मानं घोषयन् मुदा ।
वेदान्तविग्रहो रामो विश्ववन्द्यो विराजते ॥
योगेश्वरस्य रामस्य चरित्रं रोमहर्षणम् ।
शताब्दे सुरभारत्या बद्धमभ्यापि कल्पताम् ॥*

दक्षान् खडानपूपस्य भर्जितान् चणकानपि ।
भक्षयन्तो स्वदेशस्य सेवाकर्मणि दीक्षिताः ॥
वासोहीना वासहीना भारतार्यञ्च जीविनः ।
विसृज्य सर्वसंबंधान् आत्मारामा रमामहे ॥

उपरि निबद्धस्य दीप्तिमतो भावजातस्योद्गाताऽऽसीदवधूतशिरोमणी रामतीर्थः। बाल्य एवालौकिकया प्रतिभया विचक्षणानामप्याश्चर्यकरं कार्यजातं संपादयन् स हि स्मारयति जन्मसिद्धानां शुक-ध्रुव शङ्कर-ज्ञानदेवादीनाम् ।

* लेखोऽयं रामतीर्थस्य शताब्दिसमये 'संविद्' प्रकाशित आसीत् ।

१८७२ खिस्ताब्दे अक्तूबर-मासस्य द्वाविंशे दिने, पञ्चापप्रदेशे मुरालीपाल ग्रामे हीरानदगृहे बाल एक अवातरत्। पिता हीरानद पौरोहित्येन कथञ्चिद् जीवनव्यवहार निरवर्तयत्। शीलसपन्नस्यापि दरिद्रप्रायस्यास्य विप्रस्य गृहे पुत्रजन्म न लोकाना कुतूहलायासीत्। अथापि तन्मातापितरौ बालस्य चद्ररम्य मुख पश्यन्तौ परमा मुदमवापतु। ज्यौतिषिकेन बालस्य गृहस्थिति दृष्ट्वा प्रोक्त यत् "बालोऽय न चिराय भविष्यति, भविष्यन्वा मातृसुख नावाप्स्यति। चेदय शैशवमतिक्रामति विश्वविख्यात सन्नसाधारणीमाध्यात्मिकीमुन्नति लप्स्यते"। इति। हन्त! तदेव सवृत्तम्। बालजन्मनो नवसु मासेषु गतेष्वेव माता देवलोक प्रातिष्ठत। तेन प्रतिदिन जीविकाव्यग्रस्य पितुश्च महान् प्रत्यवाय उपस्थित। स्निग्धया पितृस्वस्रा, भगिन्या च तीर्थदेव्या सहर्षमूढ तत्संवर्धनभार। तीर्थरामेति नाम कृत शिशो.। मातु स्तन्यालाभात् तीर्थरामस्य शरीर जन्मन एवादृढ नानारोगक्लिष्ट चासीत्। न स बालान्तराणीव क्रीडनकेषु नापि विविधखाद्यपेयेषु अरज्जत। स खलु चिन्तनमग्न इव, किमपि स्मरन्निव, जडभरत इवान्तर्मना अवर्तत।

एकदा तृतीये हायने वर्तमान तमादाय पिता हीरानदो धर्मशालामगच्छत्। तत्र कस्यचित् प्रवचनपटो कथा शृण्वन् शिशु राम परमा प्रीतिमवाप। कथर्वकलग्नलोचनस्य सावधान कथाश्रवणमग्नस्य तस्य नेत्रद्वय अश्रूण्यमुञ्चत्। स्वभावचञ्चलस्य बालस्य प्रौढसहजमिद कर्म पश्यन्त श्रोतार परम विस्मय गता।

द्वितीये दिने कथासमये प्राप्तेऽव्यक्तभाव स रादितुमारभत। पिता तु पौरोहित्यायान्यत्र गत आसीत्। विविधेषु प्ररोचकेषु वस्तुषु दत्तेष्वपि न स उपरराम। किंकर्तव्यमूढा पितृष्वसा त बहि सचारणाय नीतवती। तत्रतत्र नीयमानोऽपि स नातुष्यत्, धर्मशालादिशञ्चाङ्गुल्या प्रादर्शयत्। यदा पुन स कथास्थान नीत तदैव तूष्णीमभवत्। अनन्यमनाश्च कथाश्रवणपरो बभूव। प्रतिदिनं मदिरेषु घटानादसमये स रोदितुमुपाक्रमत्। आरातिदर्शनलालसश्च तत्र नीत एव शान्तिमलभत।

अथ सार्धपञ्चवर्षंस्कस्तीर्थरामो ग्रामस्थिताम् उर्दूशाला प्रवेशित । अत्युत्साहेन पाठित सर्वमवधार्य गृहमागतो भगिनी पितृस्वसार च तत् श्रावयति स्म। तस्याद्भुता स्मृति विभाव्य चकिता सर्वे भृशमनन्दन्। अध्ययन-पाटव विनयशीलता च दृष्ट्वाऽध्यापकोऽपि तस्मिन् सुतरामस्निह्यत्। येन स पाठात्परमपि त सारिष्ठा कविता अशिक्षयत्। पञ्चमेऽध्ययनवर्षे स प्रथमत्वेन पञ्चमी श्रेणीमपारयत्। यथा गुरो शिष्येऽस्मिन्नपार प्रेम तथैव शिष्योऽपि गुरौ परमा भक्तिमावहरत्। स खलु पितरमवोचत्–"तात ! गुरुदक्षिणार्थं गुरवे मया मह्हिषीदान युज्यत नु किम् ?" बालस्यास्य मुग्ध-वचोभिरुच्चैर्जहास हीरानद ।

तत उत्तीर्णपञ्चमकक्षस्य बालस्याग्रेऽध्ययन कथ भवेदिति चिन्ता कुलावास्ता जनकलनयौ। गुजरानवाला नाम पत्तन क्रोशचतुष्टयेन दूरमासीत्। न च तावद् दूर दशवर्षीयो बालोऽसहाय स्थातुमर्हति इति चिन्ताव्यग्र आसीत् पिता। तत्र पत्तने धन्नाराम भगतनामा अविद्वानपि परमात्मरति कश्चित् सुहृदभूद् हीरानदस्य। तेनानुनीत स पुत्रमप्रेषयदध्ययनाय। धन्नाराम सत्सगव्यग्र बहुश्रुत सुशीलश्चासीत्। तत्सरक्षितो बालोऽचिरादेव त गुरुपदमारोपयत्। धन्नाराम प्रतिदिन रामायण, योगवासिष्ठ, महाभारत, पुराणानि चापठत्। सावधानमना बालस्तीर्थरामोऽनन्यमनसा तत् शुश्राव। मध्ये मध्ये च विस्मृतदेहेन्द्रियो विस्फारितनेत्र, कपमानगात्र, प्रवाहिताश्रुश्च बभूव। तत्रैव कदाचिद् परमात्मपरायण साधुरेक आगत । दृष्टमात्र एव तस्मिन् तीर्थराम मूर्छा गत । साधुना च तेन ॐ ॐ इति भणता सुदीर्घं जलेन सिक्त कथञ्चित् सचेष्ट सवृत्त । अध्ययने स सर्वोत्तम आसीत्। गणिते च तस्य विशिष्टा रतिरभवत्। यदि कमपि गणितपाठ न जानाति यावत् समाधान तन्मना व्यापृणोति। तत्समाधायैव च भोजनादि गृह्णाति। तदा सस्कृते हिन्द्याञ्चापि स प्राप्तपरिचयोऽभवत्।

अथ चतुर्दशवर्षीय तीर्थरामो माध्यमिकशालान्ता परीक्षामुदतरत् सर्व-प्राथम्येन। मेधाविश्रेष्ठस्यापि बालस्योच्चशिक्षादानाऽसमर्थ आसीद् दारि-

द्रचोपहतो हीरानद । किन्तु हन्त[1] गुजरानवालानगरपालिका तीर्थरामायोच्चाध्ययनार्थमेव पर्याप्ता शिष्यवृत्तिमयच्छत्। येन लवपुरनगर (लाहोर) प्रयात स उच्चशिक्षार्थम्। उर्दू-फारसीभाषयो कोविद स लवपुरे सस्कृतमप्यात्मसादकरोत्।अर्थदौर्बल्यात् तत्र दरिद्रगृहे वसन् तदा तदा रोगाक्रान्त आसीत्। तत्र ससर्पे सद्मनि तन्निवास । किन्तु हिंसाशून्यस्य निर्भीकस्य चास्य तरुणस्यागमनसूचक शब्द श्रुत्वा सर्पा स्व स्व विवर प्रविशन्ति स्म। कदाचिदर्थाभावात् पणकत्रयप्राप्तेनैवान्नेन दिनमतिवाहयति स्म। अथापि न स दारिद्रचदुःखेन ग्लानिमवाप। नापि निश्चित कार्यं परित्यक्तुमना बभूव।

तच्छीलेनाध्ययनपाटवेन च प्रसन्नो मुख्याध्यापक महाविद्यालयस्य छात्रालये तन्निवासादि अकल्पयत्। एतत्प्रत्युपकर्तुं च तीर्थरामस्तस्य व्याख्यानादिलेखनसाह्यमकरोत्। तदैव लवपुरमागत्य व्याख्यान कृतवतो विवेकानन्दस्य चरित्र प्रभावञ्च सपश्यन् तीर्थरामस्तस्मिन् भक्तिमानभवत्। तेन क्षुण्ण पन्थान चानुसर्तुं मनो दधे।

बी ए परीक्षा सर्वप्रथमत्वेनोत्तीर्णस्तीर्थराम ५३ रूप्यकात्मिका मासिकी वृत्तिमलभत। ३० रूप्यकाण्येव पर्याप्तानीत्युक्त्वा च स तावदेवागृह्णात्। एम् ए परीक्षायामपि प्राथम्यलाभेन प्रतिमास सहस्रात्मिका शिष्यवृत्तिमलप्स्यत यदि इग्लण्डदेशेऽध्येतुमगमिष्यत्। किन्तु तत्र गत्वा शासनसेवाशिक्षा लब्धु स नैच्छत्। स खलु भारत एवाध्यापनवृत्त्या सह लोकसेवामुखेन परमात्मान प्रसादयितुमैच्छत्। लोकसेवैव परमात्मसेवेत्यभवत्तस्य सकल्प।

शैशव एवास्य कुलीनया रामचन्द्राख्यस्य कन्यया सह विवाह-वाग्दानमक्रियत। दशवर्षीयस्य च तस्य तया सह पाणिग्रहणमप्यकार्यत। अस्य ससारविमुखाश्चेष्टा पश्यन् पिता विवाहमेव बन्धनोपाय मत्वा तथाऽकरोत्। अग्रे स विषयमिममेव पर्यालोचयत्—"वधूवरयोर्मनोयोगमन्तरा क्रियमाणस्य विवाहस्य न प्रामाण्यम्। नापि श्रेयस्करत्वम्। तत्रोपयुक्ता वेदमन्त्रा न तादृश विवाह पवित्रयितुमलम्। अपि तु स्वीय सत्त्वमेव ह्रासयन्ति। मान-

विवाह तज्जन्य च वालवैधव्य विप्रातु सृष्टि विकृता विघत्त"। सयमपूर्णां जीवनस्थितिमेव साधु मेने विचक्षणस्तीर्थराम ।

कथञ्चित् ससारार्णवक्षिप्तस्यापि तीर्थरामस्य मन ससार कारागारमकल्पयत्। तत आत्मान मोचयितु च प्रतिक्षणमुन्मना बभूव। अतो गणितप्राध्यापकत्वेन गौरवपूर्ण कार्यं कुर्वतोऽपि तीर्थरामस्य मनोऽध्यात्मिकानुभवाय सुतरामाचकाक्ष। स खलु वेदान्तविद्यामेव परमार्थं, परमेश्वरभक्तिमेव च जीवनकार्यममन्यत। अतो मित्रै स्वजनैश्च भूयोभूयोऽनुनीतोऽपि ससारत्याग श्रेयसेऽमन्यत। अवदच्च-"ससारत्यागो नाम न लोककल्याणप्रवृत्तित्याग, नापि केवलस्य वने वास, अपि तु रागद्वेषादिशून्यस्य सत सर्वत्र परमात्मदर्शन, सर्वसेवायाञ्च परमात्मसेवाभावनम्," इति। एतच्च कस्याचित् स्त्रिया सततिषु च समासक्तस्य पुरुषस्य न सभवति। न च तेष्वेवात्मभावेन विचरतो जनस्य रागद्वेषादिशून्यता सुकरेति विचारस्त ससारत्यागाय प्रेरयतिस्म। अथापि यावत्ससारस्थिति स भार्यां सबहुमान पश्यति स्म। सापि वेदान्ततत्त्वावगाहिनी भूत्वा मैत्रेयीगार्गीप्रभृतिभि प्रदिष्टा पदवीमनुसरेदिति भावयति स्म तीर्थराम। अत एव ससारासक्तामपि गेहिनी वेदान्तादिविद्याप्रबोधनेन शनै शनै परमार्थाभिमुखी कर्तुं प्रायतत। सापि तदनुरूपमात्मान कर्तुं सर्वात्मनोद्यता बभूव। अथापि विश्वात्मतामनुबुभूषुस्तीर्थराम न गृहस्थितिमपि तु पारिव्राज्यमेव श्रेयसे मेने। स हि पुत्रद्वय भार्यां च विहायाष्टाविंशतिवर्षात्मके वयसि सन्न्यासदीक्षितोऽभवत्। सन्न्यस्तसर्वश्च रामतीर्थ इति सार्थकेन नाम्ना विभूषितो बभूव।

सन्न्यासग्रहणात् पूर्वं हिमालये पर्यटन् तीर्थराम परमात्मदर्शन विना जीवन शून्यमभावयत्। अपातयच्चात्मान वेगेन वहन्त्या भागीरथ्याम्। किन्तु सकरुणया भागीरथ्या स पुष्पपराग इव तरङ्गैरुत्क्षिप्य बहिर्निवेशित। एतन नैव प्राणत्यागो वरीयानिति मत्वा च स स्वयमेव यज्ञोपवीतादि विसृज्य चतुर्थमाश्रम जग्राह। विंशतिवर्षात्मके जीवनदेशे सर्वा विद्या आत्मसादक्रियन्त रामतीर्थेन। वेदा, उपनिषद, सूत्रवाङ्मयम्, दर्शनानि, भाष्याणि, पुराणानि,

कान्त-हेगल प्रभृतीना च पाश्चात्याना वाङ्मयम्, उर्दू-फारसीभापानिबद्ध इस्लामचिन्तकाना च साहित्यमामूलचूड समालोचितमभूत्तेन।

स हि गृहीतसन्न्यासदीक्षो हिमालय गत्वा तत्रत्यान् यतीन् साधकाश्चा-मिलत्। सर्वानपि जिज्ञासाभावेनोपासर्पत्। मधुव्रत इव च सर्वेभ्योऽनुभूति-सारमाधत्त। तदाऽयमात्मचिन्तनैकपर, श्रीकृष्णदर्शनलालस, कदाचिद् गायन् कदाचिन्मूकभावञ्चातिष्ठन्। कदाचिच्चालौकिकेन पथा दिशो विभावयन्, परितो वसद्भिर्जनैरुन्मत्त इति, अवधूत इति, जड इति वा अवधियते स्म। विश्वात्मभाव प्रपन्नस्य सर्वमिद परमात्मना ततमित्यभूदस्याध्यवसाय। प्रत्युत्तर चिरात् प्रतीक्षमाणेन गुरुणा सोपालभ लिखितस्य पत्रस्योत्तर स एवमलिखत –

**प्रियगुरो! ! तदा पत्र लिखेय ते, भवेर्यदि।**
**दूर गत, पर त्व मे तनौ नेत्रे मनस्यसि॥**

तेषु दिनेषु विवेकानदेन विदेशेषु कृतस्य वेदान्तप्रसारस्य भूरि प्रशसाऽश्रूयत। रामतीर्थस्य विविधधर्मवैदुष्य प्रवचनपाटव च परिपश्य, तेहरीभूप कीर्तिशाह्, अन्ये च स्निग्धा त जापानदेशे भविष्यमाणा सर्वधर्मपरिषद प्रेषयितुमैच्छन्। तदर्थ पर्याप्त धनञ्च सञ्चित्य तै स्वामिनोऽभिप्राय पृष्ट। स तु तत्क्षण एव तदङ्गीचकार। जापानदेश गत्वा च परिषद स्थगनवार्ता शुश्राव। मासत्रयात्पर निश्चिता परिषद प्रतिपालयितु नाभूच्छक्य धना-भावात्। परतु तत्र सद्योजातमित्रै तस्य टोकियोविश्वविद्यालये, बौद्धविद्या-पीठेऽन्यत्र च कानिचिद् व्याख्यानानि योजितानि। बौद्धशास्त्राणा गभीरा-दध्ययनाद् बौद्धधर्मोऽपि भारतीयधर्मवृक्षस्य शाखारूप एव इति नैकं प्रमाणै स्वामिना सुचारु प्रतिपादितम्। बुद्ध बौद्धशास्त्राणि च प्रति रामतीर्थस्या-प्रतिम समादर समदृष्टि च दृष्ट्वा नैके बौद्धधर्मविद्वासोऽस्मिन् भक्तिमन्तो-ऽभूवन्। तदा जापानदेशे रसायनविद्यालाभाय गत पूरणसिंह नामा सीख-च्छात्र स्वामिनि तथा भक्तिप्रवणोऽजायत यथा स पश्चात् तच्छिष्यता गत। भारतमागत्य च स्वामिसेवाया बहूनि दिनानि व्यापारयामास। तस्मिन्नेव

समये (१९०२ खिस्ताब्दे) प्रा विष्णुपन्त छत्रे स्वीय प्राणिनाट्य (सरकस) आदाय जापान गत आसीत्। स्वामिन सख्यभाव प्राप्तो विष्णुपन्त अमेरिका देशे गच्छनासीत्। तेन सह रामतीर्थोऽपि त देश जगाम। सर्वत प्रथम रामतीर्थं केलिफोर्नियाप्रदेशस्य सानफ्रान्सिस्को-नगर जगाम। पोतसौधे मुक्तरूपेणात्र तत्र सञ्चरन्त त परित स्थिता जनगणा सकुतूहलमपश्यन्। तथा निरुद्देशचारिण च तमुपसृत्य कश्चिदपृच्छत् "महाशय ! कुत्र भवत उपकरणानि ?" राम विहस्यावोचत्-"मद्गात्रगतानि वस्त्राणि विहाय नास्ति मे किमप्यन्यत्"। "धन तु स्यादेव" ? सोऽभणत्। "नहि, नाह धनस्पर्शाया-प्युत्सहे।" "तर्हि भोजनादि कथ निर्वर्तयते भवान् ?" "यो वा को वा ददाति भोजन, पाययति च जलम्"। "तर्हि अत्र अमेरिकायामपि भवेत् खलु तादृश कश्चित्" ? श्रुत्वैतत् स्मितेन सर्वतो दीप्ति विसारयनवदत् रामतीर्थ -"आम्, अस्त्येव", पुनश्च तस्यैव स्कन्धे हस्त निवेश्य सस्मितमभणत्-"ननु भवानेव मेऽत्र मित्रम्, भवानेव मे वास भोजन पानञ्च विधास्यति"। अतिसहजमुक्तै-रेतैर्वचोभि स सर्वथा जितोऽभवत्। सादर सप्रणय च राम हस्तेनादाय स्वगृहमनयत्। एव "वसुधैव कुटुम्बकम्" इति स्फुरन्ती श्रद्धा दूरदेशेऽपि रामस्य मार्गं निष्कण्टक व्यधात्।

रामस्यानुपमेन लावण्येन, बालसहजेन स्मितेन, अकृत्रिमेण व्यवहारेण, स्फटिकस्वच्छेन च मनोभावेनाकृष्टा अमेरिकावासिन त श्रोतु सत्कर्तुं चाह-महमिकया परापतन्। तस्य सन्निधि महत आनदाय परमशान्तये चाकल्पत। रामस्य यजमानभाव प्राप्तोऽमेरिकावासी डॉ हिलर एकदाऽवोचत्-"रामतीर्थो हिमगिरे कन्दराभ्यो निर्गच्छन्त सूर्यप्रकाशमनुकुरुते। न त वह्निर्दग्धुमीष्टे, न च शस्त्राणि छेत्तु प्रभवन्ति। स हि निरन्तरमानन्दाश्रुभि स्निग्धनेत्रो भवति। नून तत्सन्निधौ वय नवीनामेव जीवनदीप्तिमनुभवाम" इत्यादि। अमेरिकास्थितस्य तस्य चित्राणि वर्तमानपत्रेषु प्राकाश्यन्त। स हि नवविग्रहो 'जिसस' इत्याघुष्यत भक्तै। नास्तिका अपि तत्सगत्याऽऽस्तिका बभूवु। जित खलु सर्वारिणा भारतीयवेदान्तदीपेन।

वर्षद्वयं यावदुषित्वाऽमेरिकादेशे, गत्वा च इंग्लेण्डदेशं, माधुर्येण विजित्य च तत्रत्यानां मनांसि, इजिप्तप्रभृतिष्वारबदेशेषु च प्रध्माय वेदान्तडिण्डिमं, प्रतिनिवृत्तो वेदान्तकेसरी, भारतदेशम्। भारतमागतस्यात्रत्यानां जनानां दारिद्र्यं, धर्मविमूढता, संशयग्रस्तता, निरुद्यमताञ्चालोक्य, भृशं ततापास्य हृदयम्। धर्मविषयिणीं जागरूकां दृष्टिमुद्बोधयितुमालस्य निरस्योद्यम-परायणतां च संधुक्षयितुमारभ्यत तेन पर्यटनम्। यत्र यत्र गच्छति तत्र तत्र तद्वाणी वह्निज्वालेव निर्दहति स्म जनमनोमालिन्यम्। अपहरति स्म च धर्मसंबाधिनीं जडताम्। अगर्जदयं वेदान्तपञ्चास्यः-"भक्तवरे ध्रुवे, प्रल्हादे, शुकदेवे, ज्ञानिश्रेष्ठे वामदेवे च प्रज्ज्वलन्ती श्रद्धा प्रकाशतां भारतीयेषु। सैव श्रद्धा भवतां मिथःकलहं स्वार्थसाधनां संशयग्रन्थींश्च निर्मूलयतुमीष्टे। द्रव्यराशीनां सञ्चयेन न कोपि महान् भवति। नापि बाह्याडंबरमात्रेण धर्मः प्रतिष्ठते। सर्वस्मिन्नात्मभावं कुरुत। दरिद्राणां दुःखिनां सेवैव च परमात्म-सेवेति विभावयत। परिग्रहभारो ह्यात्मदर्शने विघ्नायते। छद्मनार्जितं वित्तं गर्वं पुष्णाति, परमात्मनो विमुखतां च संपादयति। आनंदघनमात्मानं धन-किङ्करं भोगदासं वा मा कुरुत। जडेष्वास्थां विहाय आत्मस्वातन्त्र्यं लभध्वम्। सर्वेषु समत्ववृत्तिरेव धर्मः। आत्मवत्सर्वभूतदृष्टिः तदनुरूपा व्यवहृतिरेव च वेदान्तः"। एवमादि।

रामतीर्थस्तदा तदा प्रार्थनापरः सन्नेवमवदत्-
"अविद्ये! दूरमपसर। दुःख! विलयं गच्छ। इर्ष्ये!
नात्र ते प्रयोजनम्। निर्बलते! जलनिधौ मज्जस्व।
समागतः समयोऽभयस्य।

रामतीर्थभक्तः पूरणसिंहो गुरोरुपदेशमेवमनुवदति -"ये सर्वव्यापि प्रेमा-नुभवन्ति त एव निर्व्याजमानन्दं लभन्ते। स्वात्मनि सर्वभूतदर्शनमेव यथार्थ-दर्शनम्। एतदन्तरा नालौकिकी प्रीतिः, नापि सौन्दर्यानुभूतिः। किन्नु खलु जीवनस्य सार्थक्यं यदि तादृशं प्रेम नानुभूयते?"। रामो यद्येतादृशं कस्मिंश्चि-ज्जनान्तरेऽपश्यत् तस्य हृदयवीणा प्रहर्षझङ्कृताऽक्वणत्।

लोकेषु राष्ट्रभक्तिमुद्बोधयन्नवोचत्—"अयि भो ! देशभक्ता भवत। देशभक्तैः किल जनताहृदयं प्रवेष्टव्यम्। स्वस्य व्यक्तिभाव. परिहेयः। गर्वस्य लेशोऽपि जनताया. स्वस्य च तादात्म्य रुणद्धि। मातृभूमे. सेवायज्ञे स्वं बलीकुरुत। अहङ्कार सर्वमिव दूरीकुरुत। सर्वस्व देशाय कल्पयत्तु युष्मासु देशोऽपि युष्मत्तादात्म्य प्राप्स्यति। अग्रे गच्छत। देशो वोऽनुसरिष्यति। युष्मासु दृढेषु देशोऽपि दार्ढ्यं लप्स्यते। युष्मासु सबलेषु देशोऽपि बलवान् भविष्यति"। इत्यादि।

एकदा कश्चित् सुधारकमानिनमुद्दिश्य रामाऽभाषत –"स्पृहयामो शोध-केभ्य, किन्तु न तेभ्यो येऽन्यशाग्रनरता, अपि तु ये स्वात्मान शाग्रयितु प्रवृत्ता। नहि पदवीधरा, अपि तु देहमात्रमूलस्याहङ्कारस्य विजेतारो वीरा अपेक्ष्यन्ते। दिव्यानदस्य तारुण्यमेव येषामायु, निखिलगुणाकरो भगवानेव येषा वेतन, ते हि देशभक्तपदाय प्रार्थयन्तु। न तेषा प्रार्थना भवतु दरिद्रयाचना। किन्तु परमात्मादेशानुष्ठानलालसैव तन्मनसि चकास्ताम्"। इति।

पुनश्चैकदा ब्रह्मानदमत्तो रामा जगर्ज –"अहमेवास्मि भारतवर्ष। हिमालयो मे शिर, कन्याकुमारी चरणद्वयम्, विन्ध्या मे कटिसूत्रम्, पूर्वापरदिक्-पर्वतौ मे भुजौ। अहमेव सूर्यो भूत्वा प्रकाशे। सपूर्णं जगदेव मे स्फूर्तिविलास। चलति मयि सर्वं चलति। भाषमाणे च मयि भाषते। चिन्तयति मयि सर्वं चिन्तयति। अहमेव सकलविश्वसम्राड् भवामि"। इत्यादि। नून रामस्य विश्वात्मैक्यानुभूतौ सर्वविघ्ना भेदा भस्ममादभूत्। वेदान्तेषु जीवन्मुक्तस्य या जीवनस्थितिनिर्वर्णिता सा सकलैव रामतीर्थे दृष्टान्तमवाप। औपनिषदा वामदेवो हि स।

मधुसूदन सरस्वतीव रामतीर्थे भक्तिरात्मज्ञानञ्च युगपदेवोन्मेष प्रकर्ष-ञ्चावापतु। सदाचारमेव च स आत्मप्रकाशस्य मूल मेने। सदाचारमन्तरा न भक्तिर्नापि ज्ञान प्ररोहति।

> नाविरतो दुश्चरिताद् नाशान्तो नासमाहित।
> नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्॥ (कठोपनिषद्)

इत्यौपनिषदा वागमृत स्मारयन्निव बहुश स उपादिशत्–"सत्य माक्षात्कर्तुं धर्मं च द्रढयितु सासारिकमनुराग परिहरत। ससारवासनाम्य उदासीनस्य किल सत्य स्वय प्रकाशते। ननु सत्य तु भवता स्वरूपमेव"। पुनश्चाभणत् - "मिथ्याहकार परित्यक्तवत प्रभुप्रसाद स्वयमेवोपतिष्ठते। तेन हि च सर्वतो विसारि प्रेम सच्चिदानदरूपताया अनुभवश्चोल्लमति। सर्वसुखार्या प्रवृत्ति, आन्तर्बाह्यशत्रूणा दमनवीर्यं च श्रेय स्रोतो बनादाकर्षति। पुण्यारमनो जीवनमीश्वराधीन सत् सर्वमङगलाय कल्पते"। पुनश्चप्रसगान्तरेऽभम यत–

"सत्स्वरूपोऽहम्", "अह ब्रह्मास्मि", इत्यनुभूय निन्दकेषु असूयकेषु च करुणालुना भाव्यम्। आत्मैश्वर्यमनुभूयताम्। ईश्वरानुग्रहे च विश्वस्यताम्। एतदेव ज्ञान विपरीतन्त्वज्ञानम्। अज्ञानान्धकार एव ससारं नरक करोति। अत तमनपहाय क्रियमाणो व्यापार सिकतास्वि सद्मनिर्माणमिव निष्फल। मृत्युर्न पृच्छति किं त्वया सञ्चितमिति। स न पृच्छति कोदृशस्त्वमिति। जीवनसाफल्य न वस्तुसग्रहे किन्तु प्रज्ञालाभ एव। सत्यानुसरणमेव सौजन्यम्। सत्यानुष्ठानमेव च जीवनोद्धरणम्"।

जीवनस्य चरमकाले राजराजो रामो हिमाद्रौ विमलभूप्रदेशे न्यवसत्। टेहरीनृपस्य चन्द्रभवनप्रासादस्तद्वसतिभवनमासीत्। तत्रैव तस्य शिष्योत्तमौ नारायण स्वामी, पूरर्णासिह, अन्ये च दर्शनलालसा सुदूरवर्ति दुर्गममपि तत्स्थान बहुशो गच्छन्ति स्म। तेषु दिनेषु समागच्छत काश्चनावोचत् स्वामी राम –"मदुक्त सम्यगवधार्यताम्। नेत परमह वो वचनावसर लप्स्ये। स्वमेव स्वस्य गुरु कुरुत'। अन्यश्च दूरस्य शिष्य पत्रेणोक्त –"सप्टेम्बर-मासान्तपूर्वमागम्यताम्। तत पर रामदर्शन न भविष्यति"। काचित् अमेरिका-वासिनी शिष्या राम द्रष्टु गता। ता विसर्जयन् रामोऽभणत्, 'यत्र क्वापि व्रजसि नेमा हिरण्मयी भूमि (भारत) विस्मर। इयमेव पुण्यभूमिर्विश्व ज्ञानदीपेन प्रकाशयिष्यति"। अथ च दर्शनायागत पूरर्णसिह प्रतिगमनवेला-यामभापत –'वत्स' राम प्रायोऽचिरादेव नि शब्दो भविष्यति। शरीरमिद दुर्बल कृशकृशञ्च वर्तते। न मे चित्त लेखनभाषणादिषु व्यापृणोति। मन्ये,

शीघ्रमेव रामस्य वाणी लेखनी च विरता भविष्यति, शरीरञ्च निश्चेष्ट-मुपरस्यते। प्रतीयते यद् नेन पर शरीरमिदमधिल्यकासु सचरिष्यति, न चेद गगाकूल त्यक्ष्यति"। एवमादि भणता देहापरते प्राक्सूचनैव कृता रामेण।

अवधूतशिरोमणे रामस्य जन्म, प्रव्रज्याग्रहण, कलेवरविसर्जनञ्चेति त्रयमपि दीपावलीदिनेऽभवत्। अथ दीपावलिदिने (१९०६ ख्रिस्ताब्दस्या-क्तूबरमासे) भगवत्या भागीरथ्या पवित्रे क्रोडे स्नानार्थमुपाविशत्। व्यसृजच्च तत्रैव भौतिक देह नराधिपाग्रिपो रामतीर्थ। "शिवोऽहम्, शिवोऽहम्" इति क्वणन् आत्मारामो विश्वात्मरामो बभूव।

यस्मिन् वयसि जना जीवनकार्यमारभन्ते तत्रैव वयसि, आप्तकामो रामो सुमहत्कार्येण जगनाथ परितोष्य जीवनलीला समापयत्।

●



# कर्मवीरः सरदार वल्लभभाई पटेल

**संघशक्तिसमुत्पादेऽनुपमो कार्यकोविद ।**
**भारतैक्यसमाहर्ता वल्लभो लोहपुरुषः ॥**

अघटितघटनापटीयस परमात्मनोऽगम्या खलु कार्यप्रणालि । धर्म-प्रतिष्ठार्थं अधर्मोन्मूलनाय चाविर्भवन् भगवान् रामभद्र स्वकार्यसहायान् लक्ष्मणसुग्रीवहनुमदादीन् सहकृत्यैव भूमिमवततार। तेषा साह्येन च साध्य साधयामास। भगवान् कृष्णचन्द्रोऽपि कसादीन् भूभरानुत्सारयितु सराम सपाण्डवश्च प्रादुर्बभूव। तथैव वैदेशिकशासनमपाकर्तुं लब्धजन्मा महात्मा गाधिरपि अप्रतिमोत्साहान् कार्यकुशलान् राष्ट्रभक्तान् सहायान् निमन्त्र्यैव भारतभुव स्वजन्मधन्या विदधे।

सत्य क्रान्तदर्शिन कवयो विचारवैशद्येन जनचेत शोधयन्ति। तत्त्व-दर्शिनश्चिन्तका मानवबुद्धि प्रकाशपुञ्जेन काम पूरयन्ति। शब्दस्वामिनो पण्डिताश्च नूत जनताजाड्यमपसार्य चेत स्फूर्ति जनयन्तीति न वितथम्।

किन्तु शुद्धचेतसामपि, निश्चिनसाध्यानामपि, निर्वतिनजाड्यानामपि जनाना सधैर्यं कार्यप्रवणताजनने विरलविरला एव भवन्ति समर्था । 'योजकस्तत्र दुर्लभ.'। नून तादृशो विरलशक्तिमातभूत् कर्मवीरोत्तम पटेलावटङ्को भारतवल्लभो सवल्लभशक्तेरवतारो वल्लभमाईमहोदय ।

१८७५ ख्रिस्ताब्दस्य ओक्टोबरमासस्यान्तिमाया तिथौ गुर्जरप्रदेशे नडियाद नगरे मातामहगृहे समजायताप्रतिमधीषणा धैर्यघनोऽय वल्लभ·। शचिपुरन्दर-योजेयन्त इव–लाडबाई-झवेरभाई नाम्नो प्राप्तजन्मासीद् वज्रसारो वल्लभ । श्रूयते यत् झवेरभाई स्वभावत स्वातन्त्र्यप्राण १८५७ ख्रिस्ताब्द आङ्ग्लान् विद्रावयितु प्रवृत्ते सग्रामे चाद्यन्तोल्लाहेन भागभाग्भूत्। तत्फलरूपेण च तस्य महती सपत्तिराच्छिद्यत विजयसंराङ्ग्लै ।

वल्लभपितु पैतृक गृहमभूत् नडियादतो नातिदूरे 'करमसद' नामके ग्रामे। किन्तु नि स्व पिता सपरिवारोऽवात्सीत् नडियादपत्तने देवमदिरे। तस्य पाण्डवोपमा पञ्च पुत्रा कनिष्ठा दुहिता चेति सन्ततिषट्कमजायत। तेषु बुद्धिमद्वरेण्यो विश्रुतकीर्तिर्विट्ठलभाई तृतीय, वल्लभश्च चतुर्थोऽभव-ज्जन्मक्रमेण।

प्रगल्भप्रज्ञोऽपि वल्लभो बाल्ये न विद्यारतिरासीत्। द्वाविंशतितमे वर्षे वर्तमान. स कथञ्चिद् मैट्रिकपरीक्षामुदतरत्। अध्ययनकाल एवास्यानुपमा सहिष्णुता, प्रहसनपटुता, वर्मदाढ्यं च प्रकाशितान्यभवन्। विपदि धैर्यं, मत्युत्पन्नमतित्वञ्चास्य जन्मजाता गुणा। एकदा क्रीडापरेणानेन कोपितोऽध्यापको द्विशतवारमङ्कपङ्क्ति (गुर्जरभाषाया 'पाडा'भिधाना) लिखितु दण्डमदात्। दिनद्वय तदलिखन् स प्रधानाचार्यसमक्ष नीत सामर्षं च पृष्टे-नानेन गाम्भीर्येणोक्तम् –"गुरो ! द्विशत पाडान्(महिषान्)आनयतेवासम्। किन्तु मध्येमार्गं तेषामन्यतमो भीत पलायनपरश्चान्यान् प्राहरत्। तेन च विशाख्या सर्वे वादिशिवा अभूवन्। प्रवरान् पलायनपराश्च ताञ्शाहमसक प्रतिरोद्धुम्। अत पर भवन्त एव प्रमाणम्" इति। शृण्वंतत् प्रहसनपटो-

वल्लभस्य वचो जहासाच्चं प्राचार्य । लज्जितश्चाध्यापको नम्रमुख तूष्णी स्वस्थानमगमत् । अन्तर्हासो वल्लभश्च प्रसन्नमुखो निरगच्छत् ।

नडियादपत्तने नगरपालिकासभ्याना निर्वाचन भविष्यदासीत् । तत्र सदस्यतावाञ्छोरध्यापकस्य प्रतिस्पर्धी बभूव कश्चिद्धनिको बहुसहायवान् । स हि सहुङ्कारमसकृज्जगर्ज –"कोऽय शिक्षकवराको मा पराजेतुम् ? न हि जम्बुको तरक्षु जयन् दृष्ट ? यद्यह तेन पराजित स्याम्, मस्तक मे मुण्डयेयम् ।" इति । वल्लभो निर्वाचनोदासीनोऽपि मत्तस्य तस्य मदमपावर्तुमियेष । सतीर्थ्यसहायश्च स तथा प्रावर्तत यथा स दृप्त पराजितोऽभवत् । तत सनापित ससहायश्च वल्लभस्तमुपसृत्य मस्तकमुण्डनायादिदेश । बद्धाञ्जलिश्च स दृप्तो दयनीयमात्मान निवेदयामास ।

## विदेशयात्रा

उत्तीर्णमाध्यमिकपरीक्षो वल्लभ स्वयमेव वाक्कीलविद्यामध्यगीष्ट, उदतरच्च तदर्थं कल्पिता परीक्षाम् । तत , स आङ्ग्लदेश गत्वा, 'बेरिस्तरा'-ख्यामुत्तमा वाक्कीलपदवी चकमे । किन्तु तदर्थं धन कुत आनेयमिति व्यामूढो 'स्वार्जितेन धनेनैव विदेशो गन्तव्य' इति निर्णीय सर्वात्मना धनार्जनाय प्रवृत्त । पञ्चदशसहस्ररूप्यकसाध्य विदेशगमनमिति सप्रधार्य द्वित्रैर्वर्षै तावन्मात्र धनमार्जत् । तत विदेशयात्रार्थं च पत्रादि सम्प्रेष्य तदर्थमनुमर्ति लेभे । यात्रा-पोते स्थाननिर्धारणपत्रमपि प्राप । अथ पत्रमेतद् दृष्ट्वा तदग्रजो विट्ठल स्वय गमनोत्को वल्लभमुवाच –' भ्रात ! आवयोर्नाम्नी समाने । (वी जे पटेल इति उभयोर्नाम) ज्येष्ठोऽह पूर्वं बैरिस्टरो भूत्वाऽऽगच्छेय तद्धि न्याय्यम् । नाह त्वदनतर तत्कर्तुं शक्ष्यामि" इति । भ्रातृभक्तो वल्लभस्तद्गिरा खेदमनु-मेने । लब्धोपाधौ प्रतिनिवृत्ते च ज्यायसि सहोदरे, तदाशीर्वादपाथेय स स्वय सङ्गनपुरी जगाम ।

आङ्ग्लदेशगमनोत्कठाया मुख्य बीजमिदमभूत्–"सहस्रेभ्य क्रोशेभ्यो भारतमागत्य शासितॄणां देश कीदृशो नु स्यात् ? कीदृशी सा भूमि वषट्कार

## वाक्कोलव्यवसायः गांधिसंगमश्च

१९१२ ख्रिस्ताब्दे समुद्रपोतेन वल्लभो मुंबापुरीं प्रतिनिवृत्तः। गुर्जरप्रदेशमुख्यायाम् अहमदाबादनगर्याञ्च स वाक्कीलव्यवसायमारेभे। समनन्तरवर्षे तस्मिन्नेव दिवसे गतः। ततो राष्ट्रियसभायाः शाखारूपायाः गुर्जरसभायाः सदस्यत्वमधिगम्य तत्कार्यप्रवृत्तोऽभवत्। तेषु दिनेषु महात्मना गांधिना अहमदाबादनगरे आश्रमः स्थापितः। तत्रान्त्यजसेवां राष्ट्रभक्तिप्रचारञ्च कुर्वन्नासीत् महात्मा। महात्मन आर्जवं साधुवृत्तिश्च पौरुषमूर्तये वल्लभाय नारोचत। स हि महात्मा रथ्यासु स्वयं डिण्डिमघोषेण जनानाकारयन् वैदेशिकानां वैदेशिकवस्तूनाञ्च दास्यं हृदयेन निनिन्द। एतत्सर्वं वैदेशिकवस्त्रविभूषितो वल्लभः सकौतुकमपश्यदुपजहास च। अथापि गच्छता कालेन विहारप्रदेशे दीनानां कृषकाणां वैदेशिकैः क्रियमाणं कदनं प्रतिकर्तुं प्रवृत्तस्याकुतोभयस्य महात्मनोऽस्यातुलं वीर्यं दृष्ट्वा कृषकसुतो वल्लभस्तस्मिन् सादरो बभूव। चपारण्यातिवर्तितुमाङ्ग्लैरादिष्टे महात्मनि स ह्येव जगर्ज-

"दरिद्रदरिद्रान् वंदशिवं क्षेत्रपतिभिश्च चुष्यमाणरुधिरान् मेश्महायान् बान्धवान् वृकेभ्यश्छागानिव बलीकृत्य नाहमितो गमिष्यामि। शासन मामुत्क्षिप्य क्षिपतु नाम बिहाराद्बहि, नाह तदाज्ञामनुरुन्धे" इति। महात्मन सिंहगर्जनेय वल्लभस्य शौर्यरसप्रीतिमुद्भ्यायामास। स हि महात्मानमुपसृत्य देशकार्याय तन्निदेशवर्तिनमात्मान स्थापयामास। जनपरीक्षानिपुणश्च महात्मा त हृदयेन जग्राह। तत पर शिष्योत्तम स्थूलवस्त्रधर शुष्कान्नतृप्तश्च वल्लभ आजीवन न क्षणमपि स्वार्थाय प्रावर्तत न च देशसेवाव्रताद्विरराम।

## सत्याग्रहाग्रणीः

तदनु अहमदाबादनगरपालिकाया आदौ सदस्य ततश्चाध्यक्षो भूत्वाऽऽङ्ग्लशासकै क्रियमाणान् प्रत्यवायान् सधैर्यमुत्सार्य, जनताकल्याणाय नैकानि कर्माणि चकार। प्लेगव्याधिसमाक्रान्ते च तन्नगरे जनतायै भूरि साह्य व्यतरत्। खेडामण्डले दुर्भिक्षग्रस्ते शासनेन कृषकेभ्यो भूमिकरो न ग्राह्य इति निवेदित गाधिना। तदवगणय्य करग्रहाभिनिविष्ट शासन प्रतिकर्तुं सत्याग्रह आरभ्यत महात्मना। तेन सत्याग्रहाय कृषकान् सन्नाहयितु शासनात्याचाराश्च प्रतिकर्तुं वल्लभोऽकारि नायक। स हि तथा लोकान् धैर्यमलम्भयत तथा चायोजयत् प्रतीकार यथाऽचिरादेव शासन स्वदुराग्रह शिथिलीचकार। अनुमेने च करमुक्तिम्। नृसिंहस्य वल्लभस्य तदा कार्यधुरन्धरता प्रशसन्नुवाच महात्मा-"

नून वल्लभमेव सत्याग्रहस्यास्य सकलताबीजमवैमि। सत्याग्रहनेतृत्वे हि तमह गुरु कलयामि।"

अल्पवाचो वल्लभस्य अनितरसाधारणी सघटनशक्ति सर्वत्र भूरि ख्याति प्रशसा च प्राप।

१९२१ खिस्ताब्दे वल्लभ प्रदेशराष्ट्रियसभाया आध्यक्ष्य प्रापित। तस्मिन्नेव वर्षे चाहमदावादे सपतस्य राष्ट्रियमहासभाधिवेशनस्य स्वागताध्यक्षो भूत्वा वरीयसीमायोजनशक्ति दर्शयामास।

एतावति समये वल्लभस्य सिंहसदृशता विभावयन्तो राष्ट्रनेतारस्त नागपुरे प्रवर्तयिष्यमाणे ध्वजसत्याग्रहे नेतारमवृण्वन्। सपादमास च प्रवृत्ते तत्र विग्रहे वल्लभो विजयी बभूव। १९२८ ख्रिस्ताब्दे सूरतमण्डलान्तर्गते **बारडोलीजनपदे** कृषकाना करमुक्तये महान् सत्याग्रह आरभ्यत। तस्य पुनर्नायकोऽभवद् वल्लभ। अतिरुष्टस्य विविधैरुपायै प्रजापीडनप्रवृत्तस्य च शासनस्यादम्येन धैर्येणानुपमया सहिष्णुतया च प्रजाभि शान्तमूर्तिभि कृत-स्यापूर्वस्य तत्प्रतीकारस्य बल दर्शदर्श मित्राणि चामित्राणि च परममाश्चर्यं जग्मु। अन्त प्रजाया प्रतिकार प्रतिकर्तुमक्षम शासन करविमुक्ति, पूर्व-गृहीताना दण्डवस्तूनाञ्च प्रत्यर्पण चकार। प्रजाशक्तेर्विजयोऽय वल्लभस्या-नुपमामायोजनशक्ति सर्वत्र देशे ख्यापयामास। परितो वर्षितै प्रशसापुष्पैश्च तच्छिरो नमयाबभूव। सर्वेषा च कार्यविदा मुखादुत्थितोऽयमहोभावप्रसूतो ध्वनि –"वल्लभोऽय नून "सरदार" (नायक) इति। अयाचितप्राप्तेन सरदारबिरुदेन विभूषितोऽभवद् वल्लभस्तत प्रभृति।

एकदा १९३० ख्रिस्ताब्दे रासग्रामे सयोजिता प्रजाजनसभामुद्बोधयति स्म वल्लभ। वल्लभस्य मेघगभीर, वह्नितीव्रा च वाणी श्रावश्राव प्रत्स्तो-त्साहा जना उच्चैराक्रोशन्। आक्रोशभूयिष्ठा सभामिमा निषेधयामास रक्ष-काग्रणी (पालिस सुप्रिन्टेन्डन्ट)। तन्निषेधमवमान्य भाषमाण वल्लभ गृहीत्वा मासत्रयमित कारावास पञ्चशतात्मक दण्डञ्चाख्यापयच्छासनम्। दण्डादाने सप्ताहत्रयमधिके कारावास आसीत्। इदम्प्रथमतया प्रापदिम कारावास वल्लभ। तस्मिन्नेव वर्षे महासभाध्यक्षे जवाहरे कारावास प्राप्ते तत्पिता **मोतीलाल** आध्यक्ष्य प्रापत्। तस्मिश्च पुनर्गृहीते वल्लभस्तत्पद मण्डयामास। अथ लोकमान्यतिलकस्य पुण्यतिथिप्रयुक्ताया यात्राया नेतृत्व भजन् सरदारो मुम्बापुर्यां गृहीत्वा कारागार प्रवेशितो नवमासान्तम्। किन्तु गान्धिप्रभृतीन् विसर्जयन् राजप्रतिनिधिवर (वाइसरॉय) सरदारमपि मोच-यामास।

# राष्ट्रियमहासभाया अध्यक्षः

१९३१ ख्रिस्ताब्दस्य मार्चमासस्य द्वितीये सप्ताहे कराचीनगरे, राष्ट्रिय-महासभाया ४६ तममधिवेशनं समपद्यत। तत्पूर्वमेवानुपमां तस्यायोजन-शक्ति राष्ट्रभक्ति सकल्पशक्ति च पश्यन्त तस्मिन् बद्धभावा नेतारो वल्लभ-मध्यक्षमवृण्वन् तदधिवेशनस्य। वल्लभगाधी पार्थकृष्णसदृशाविति च विभाव्य, नरसिंहरावेन गुर्जरकविना तत्रोक्तमासीत्तदा –

> यत्र योगेश्वरो गाधिः वल्लभश्च धुराधरः।
> तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥

स्वातन्त्र्ययुद्ध-महाभारत सुखोदर्क परिपश्य नूनमेतदधिवेशनमवितथ परिणतम्। तस्मिन्नधिवेशनेऽध्यक्ष कर्मवीर सरदारो न दीर्घमभाषत। "किंकर्तव्यता-विमूढस्य देशस्य गांधिरेव पथप्रदर्शकः। तं परमात्मप्रेषितं नेतारं सर्वात्मना-ऽनुसरेम, एतदेव भवतु नः कर्तव्यम्। तेन प्रदर्शितात् सत्याहिंसापथात् न पदमपि चलनं युज्यते। देशसेवा स्वातंत्र्यप्राप्तिश्च न भोगपरायणैरसदाचा-रैश्च शक्यक्रिये। हिंसकं प्रति प्रतिहिंसा नाम न सदाचारो नापि वीरता न च प्रस्तुतकार्यसाधनम्। देशप्रेमिभिः, तथा देशोत्पन्नैकवस्तुसेविभिः शासन-साह्यविरतैश्च भाव्यं यथा शासकानां शासनकर्म दुःशकमुद्वेजकं च जायेत। दुःसाध्येऽपि कर्मणि कर्मरताना सिद्धिरनिवार्या। साध्यैकव्यापृतानां राष्ट्रैक-सेवाव्रतिनां नो जयो निश्चप्रचः। तत्र विलंबो भवेन्नाम परंतु निष्फलता न शङ्कनीया"।

एवमादि असन्दिग्धैः स्वल्पाक्षरैरेव वचोभि प्रबोधयामास मितभाषी सरदारो भारतभक्तान्।

प्रजाना भीतिमपनुद्य ता विद्रोहपरा अयमेव करोतीति मतिमता शासनेन पुनश्च सरदार. शासनविद्रोह निमित्तीकृत्य कारागृह प्रवेशित। पूर्वं षोडश-मासान् स गाधिना सह यरवडास्थले न्यवसत्। यरवडानिवाससमये रुग्णस्य गाधे. सेवापरस्य तस्य मृदुल चेतो वर्णयन् वदति महात्मा–"नूनं वल्लभो मे

द्वितीयमातेवाभवत्। स हि रुग्णस्य मे शुश्रूषापर न कदापि स्वसुखमचिन्तयत्। अहर्निश मत्सेवा स परमार्थमिवाकल्पयत्" इति।

'लोहपुरुषो वल्लभ' इति व्याजस्तुत्या केचन त रुक्ष कठोरञ्च ख्यापयन्ति। त दृढमवल्लभस्य तस्य लोहपुरुषत्वकल्पना युक्तरूपैव। अथापि तस्य मृदु प्रेमपूर्णञ्च चेतो मित्राणामन्येषाञ्चोपकारायाभूत् सदोद्यतमिति न विस्मर्तुमर्हाम। अन्येऽपि तत्सहवासिनो नैकशोऽभणन् यत् कारागारे सहवासिना व्यवस्था भोजनादिसमीचीन्य च स्वयमेव श्रम सोढ्वा साधयति स्म सरदार.। तदधिष्ठिना कारावासिन शासनाधिकारिभ्योऽपि सुरक्षिता सन्त प्रभूत सौक्यं लभन्ते स्म। प्रहसनचातुरी अपि वल्लभस्यानितरसाधारणी। स हि विनोदवचोभि कारानिवासमपि स्वर्गावासमिवाकरोत्। अथ गाधिमहात्मनि कारामुक्तेऽपि न सरदारोऽमुच्यत। स हि यरवडातो नाशिककारागृहमनीयत। तस्य ज्येष्ठभ्राता परमराष्ट्रभक्तो विठ्ठलः वियेनानगरे पञ्चत्वं गतः। "तस्यौर्ध्वदैहिकमनुष्ठातु वल्लभो मुच्यते यदि स पुनर्विद्रोही न स्यादि"ति सर्वोच्चशासनम्। "नाह पणेन मुक्तिं कामये" इत्युदगिरत् सरदार। एव कारामुक्तश्च स तदनु रोगग्रस्त इति मोचित आसीद् वर्षद्वयात्परम्।

तस्मिन्नेव वर्षे स राष्ट्रियसमाया अनुशासकमण्डलस्य (पार्लमेन्टरी बोर्ड) अध्यक्षपद प्रापित। उच्चैः राजेन्द्रप्रसाद-मौलानाआज़ाद प्रभृतयो यत्तदस्या नन्याध्यक्षस्य नून सरदारस्य कर्मविशेषज्ञताया धौरेयत्व प्रत्याययन्ति।

१९३७ खिस्ताब्दे एकादशस्वोऽस्मु प्रदेशेषु राष्ट्रियसमाया शासनलाभो बभूव। सर्वेषा मन्त्रिमण्डलाना नियामकोऽभवत् सरदार। दृढानुशासनस्यास्य प्रतापेन सर्वे मन्त्रिण स्व स्व नियोग यथायथमवहन्। सति च ज्ञातोऽपि अनुशासनभङ्गे सरदारस्य दण्ड शिरोभङ्गाय सन्नद्ध इवामन्यत। अनुशासनविद्विषनस्व केचन लब्धप्रतिष्ठा अपि नरीमान-खरेप्रभृतय पदच्युति प्रापिता आसन्। तदनु तैरारब्धोऽपि कलह पाषाणपतितलोष्टमिवात्मभङ्गायैवाकल्पत।

# भारतैक्यविधाता

१९४७ खिस्ताब्दस्यागस्तमासस्यारम्भदशनिधौ चिरेण कांक्षितं स्वातन्त्र्यमवाप्तं भारतेन। तत एकादशमासं पूर्वं रचिते केन्द्रीय-जवाहरलालाधिष्ठिते मन्त्रिमण्डले सरदारोऽन्यतम आसीत्। देशविभाजनं कथञ्चिन्निवारयितुमशक्ये, जाते च हिंदुस्तान-पाकिस्तानेति विभागद्वये, पुनर्नूतनमारब्धं मन्त्रिमण्डलम्। तत्र सरदार उपप्रधानमन्त्री सन् गृहविभागस्याधिष्ठाता बभूव। तदनु घटितस्य देशिवराज्यविभागस्यापि स एव मन्त्रिपदमुवाह। पाकिस्तानाद् विद्रावितानां नष्टसर्वस्वानां भीतभीतानां हिंदुसिखानां पुनर्निवासव्यवस्था, तद्दुःखदु खितैस्त्रस्तैर्हिन्दुसिखैश्च सम्भाव्यादुपद्रवाद् मुस्लिमानां रक्षणमिति द्विविधो दु सहकार्यभारो मुख्यतया सरदारस्य शिरसि पतित आसीत्। किन्तु हन्त ! अतिधैर्येणालौकिकेन च मतिविभवेन स भारो निपुणं निरूढ सरदारेण। अज्ञा स मुस्लिमशत्रुं ख्यापयन्ति स्म। किन्तु प्रज्ञावन्त सम्यग्जानन्ति यद् भारते वर्तमाना अपि ये देशान्तरैकहितमतयः स्वदेशशत्रवश्च तादृशान् प्रति चक्षुर्निमीलनमात्मघातायैवेति मन्यमानस्य सरदारस्य न मुस्लिमसामान्यं प्रति प्रद्वेषः, नापि हिन्दुरयमिति देशद्रोहिणि प्रीतिः। स हि राष्ट्रकल्याणमेव कामयमानः मनुष्यस्य राष्ट्रभावनामेव प्रमाणयति स्म, न तस्य जातिविशेषम्। मुस्लिमानां साह्यसपादनमतिभिरप्यस्माभिर्न तेषु विपरीतकारिष्वपि बद्धनेत्रै मुग्धैश्च भाव्यमयमेवासीदभ्युपगमो व्यवहारनिपुणस्य देशवल्लभस्य वल्लभस्य।

आङ्ग्लशासितं भारतं स्वतन्त्रमभवत्। किन्तु समग्रे भारते विकीर्णा न्यासन् नृपशासितानि राज्यानि नैकशतानि। तेषु कानिचित् सुनृपशासितानि बहूनि च प्रजापीडनपरैर्विलासजीविभि नृपब्रुवैः शासितान्यासन्। तत्तद्राज्यप्रजाश्रेयोदृष्ट्या तेषां प्रजातन्त्रभारते संयोजनमनिवार्यमकल्प्यत। किन्तु ततोऽप्यधिकं देशस्य रक्षादृष्ट्या, विविधानां विकासकार्याणामायोजनदृष्ट्या च तेषां समग्रभारते लयोऽत्यावश्यक आसीत्। आङ्ग्लानां शासनकाले नृपास्तै सन्धिबद्धा रक्षिताश्चासन्। स्वशासनेऽस्तं गमिते धूर्ता आङ्ग्लास्तान् नृपा-

मार्गेण राष्ट्रान्तरे रावध्य, भारतशासन प्रतिवर्तुमीष्टे। स एव च तस्या ध्यवसाय इत्यपि वर्णावर्णि श्रूयते स्म। तदैवैकदा प्रभाते जनैर्वर्तमानपत्रेविदित यद् "भारतीया सैना पञ्चभ्यो दिग्भ्य शशस्त्रास्त्र वारयेव सवेग प्रविष्टा निझामभूमिम्। पूर्वं प्रतिश्रुताया अप्यनिग्रयनत्वाप्निरोद्धुमशक्याया, पञ्चभि प्रवाहै पतन्त्या गिरिनद्या इव भारतसेनाया अतिपातो निरावाध प्रवर्तन स्म। निझामसेना रजवरदलानि च भित्तागृहाणीव परितो भग्नानि, न्यस्तशस्त्रा श्च शरण प्रपद्यन्ते भारतसेनाया।" इति शनै शनै सकलमपि निझामराज्य भारतायत्त समजायत। भारतसेनानायक **चौधरी** च तत्रशासकत्वेन निवेशित। परस्ताज्ज्ञातमभूद् यत् सरदार चिरादेव भारतसेनाधिपेन प्रच्छन्न मन्त्रयन् निझामभूमिं परित प्रवलान्यनीकापि सन्नाहयितु प्रवृत्त आसीद्। सर्वतो विसारि आक्रमण च मध्यरात्रावुपाक्रमत। तत्पूर्वमेव तत्र प्रच्छन्न दिल्लीतो गत्वा सन्निहित आसीत् कार्यविदा वर सरदार। विद्युद्वेगेन सर्व-दिग्भ्य सेनाप्रवेशेन व्यामोहनीय किङ्कर्तव्यतामूढताञ्च प्रापणीयो निझाम इत्यासीत् सरदारस्य योजना। बहुकालात् स व्याप्रियतात्मान कर्मण्यस्मिन्। अथापि न कोप्यवेद् गूढसत्त्वस्यास्य प्रवृत्तिम्। "फलानुमेया प्रारंभा सस्कारा प्राक्तना इव।" इति कालिदासवच किल सार्थकीकृतमनेन नरशार्दूलेन।

दक्षिणरत्नाकरोपकण्ठे 'त्रावणकोर' नाम विशाल विभववच्च राज्य-मासीत्। महाप्रज्ञा धर्मप्राणाश्च तस्य राजान प्रजाप्रिया विद्वदाश्रयाश्चासन्। तत्र मेधाविसत्तमो बहुमुखप्रतिभश्च **सर रामस्वामी अय्यर** मन्त्रिपदमुवाह। सोऽपि भारते स्वाधिष्ठित राज्य मा विलीयतामिति दृढ प्रत्येति स्म। निझाम राज्यस्य विलयमन्तरा स्वशासितस्य राज्यस्य विलयो न न्याय्य इत्यप्यासीत्त स्याकूतम्। राजापि तदभिप्रायमतिक्रमितु नासीत् प्रभु। विचक्षणवरो वल्लभ पटुभिरुपायै तत्रत्या प्रजा विद्रोहिणीर्विधाय राजान भाययामास। अभिसधाय च त भारते स्वराज्यप्रवेशपत्रे हस्ताक्षराणि कारयामास। भग्न-मनोरथो महामती रामस्वामी सपद्येव मन्त्रिपद तत्याज।

एव मतिविभवेन कार्यदाक्ष्येण च महदुपद्रवहेतुतो देशिकराज्यस्वातन्त्र्याद्र रक्ष देश सरदार। नून द्विसहस्रेऽपि वर्षाणामननुभूतपूर्वा विस्तृतभारतस्यैक-

च्छन्नता सपादिता कार्यविदाऽवरीकृतबिस्मार्केन वल्लभेन। (बिस्मार्क जर्मन-देशस्यैक्य साधयामास)

सरदारो राज्याना विलयमावश्यक मन्वानोऽपि राज्ञामुदार त्यागमिम कृतज्ञभावेन सस्मार। अत तेषा सम्मानपदरक्षा, नियता द्रव्यप्राप्ति, कर-मुक्तिश्चेतादृशा कल्पा आयोजिता साग्रह सन्निवेशिताश्च भारतसविधाने। तथापि नाय शाश्वतिकोऽर्थभारो भवतु प्रजास्वित्यभिसधायानुवश तद्ह्रास पञ्चाशद्वर्षेभ्य पर च ननामशेषता घटयामास। एतया व्यवस्थया राजान अकृतपूर्वानुयोगानभ्यस्येयु स्वावलबिनश्च स्युरित्युदार कल्पोऽभवद् विधान-घटकानाम्। अत स्वसपदाच्छेदकमपि वल्लभ ते हितैकमतिममसत। कर्मण्यस्मिश्च वल्लभो भीमकान्तैर्गुणैर्नूनमधृष्योऽप्यभिगम्य एव मत।

## उपदेशादाचारः श्रेयान्

वल्लभो वचनकर्मणोर्विसगति कदापि न सेहे। महासभया नून पञ्चम-वर्णानामस्पृश्यतानिवारणमुद्देश्येष्वन्यतममधार्यत। महात्मा गाधिस्तद्धि दीर्घकालीनपापप्रणोदक हिंदूधर्मशोधकञ्चाकलयत्। किन्तु न तदनुयायिन-स्तत्र बद्धश्रद्धा येन ते सभासु हरिजनाना पृथक्स्थानान्यकल्पयन्। एकदा तादृक्सभाया सौराष्ट्रे कृताया वल्लभ उपातिष्ठत्। स हि दूरोपविष्टान् हरिजनानवलोक्य सभायोजकाना दम्भ सम्यगबुध्यत्। एतेन क्लिष्टमना स तूष्णीमुत्थाय धूलिधुसरिताना कुचैलाना हरिजनाना मध्यमुपगम्योपविवेश। पुरर्षभ वल्लभ हरिजनमध्यगत दृष्ट्वाऽन्येऽपि द्वित्रास्तत्र गत्वोपाविशन्। आयोजकाश्चैतन भृश लज्जिता निम्नविस्तारितलोचना बभूवु। क्रमेण च सभापीठ विहाय सर्वे सभानायका वल्लभ परित समुपाविशन्। तत पर न कदापि लल्लभसेसेविते सदसि हरिजनाना पृथगासनानि प्रकल्पितानि। सुदीर्घव्याख्यानादनुष्ठानमेव वरीय इत्यासीद्वल्लभस्य निष्ठा।

## वल्लभो लोकवल्लभः

स्वातत्र्यप्राप्ते समनतर त्रिषु वर्षेषु सरदारकृता राष्ट्रसेवा भारतीया सबहु-मान सविस्मय च पश्यन्ति स्म। अत तस्यास्मिमे जन्मदिने तस्य चिरकाल

कार्यंभूमिभूतेनाहमदाबादनगरेण सोत्कण्ठं सादर च तं निमन्त्र्य प्रजाप्रेमप्रतीकरूपेण पञ्चदशलक्षरूप्यकात्मक धनमुपदीकृतमभूत्। गुर्जरप्रजा सरदार गाधिद्वितीयमेवाकलयन्ती तन्नाम्ना महान्तं विश्वविद्यालयं निर्मातुमभ्यलपत्। ततश्च तदर्थं वल्लभपितृग्रामस्य करमसदस्य नातिदूरे कृतज्ञैः कर्षकै स्वीयानि सरसानि बहुमूल्यानि च क्षेत्राणि अहमहमिकया परापत्य समर्पितानि। नैककोशव्यापिन्या च तस्या भूमौ 'सरदार वल्लभभाईपटेल विश्वविद्यालय' सस्थापित.। एतस्मिश्च कर्मणि सरदारगुणावर्जितचेतसौ कर्मकुशलौ भाईलालभोखालाल इति पुरुषर्षभौ प्रभूत प्रावर्तेताम्। वेगेन च भूमिसस्कार, विद्यालयादिसदनसङ्घानाञ्च निर्मितिः समपाद्यत।

## वल्लभस्य धर्मेश्वरनिष्ठा

वल्लभो बाल्यादेव परमधार्मिक ईश्वरैकनिष्ठश्चावर्तत। किन्तु स स्वस्य धर्मनिष्ठामान्तरमेवं व्यापारममन्यत, न प्रदर्शनविषयम्। लोकोपदेशे स सर्वदा "भगवत्कृपया न सदुद्देश सेत्स्यति, शुभे कर्मणि सदा परमेश्वरोऽनुकूला याति", इत्याद्यभणत्। ईश्वरास्थाहीनो जन स्वसिद्धया गर्विष्ठो भवेत्। कार्यासिद्धौ च विषण्णो दीनता व्रजेदिति स हृदयेनामस्त। सौराष्ट्रे सञ्चरन् स एकदा पश्चिमसमुद्रोपकण्ठे विराजमानमाद्यज्योतिर्लिङ्गत्वेन लब्धप्रथ भगवन्त सोमनाथ साक्षात्कर्तुं जगाम। यवनाना नैकैराक्रमणैर्भग्नकाय सदालयञ्च दृष्ट्वा स भृशमुद्विग्नोऽभवत्। भारतपश्चिमदेवताया सोमनाथप्रभोरागारस्य पुनर्निर्माणाय च समुद्रजलाञ्जलिना सुदृढं सकल्प व्यापयामास। तदानीमेव चायोजनपट्टस्य मुन्शी-जामेशादीना समितिं निर्माय सकल्पितस्य महामदिरस्य रचनाविशेषान् निरधारयत्। भारतशासनेन च वर्तव्यं साह्यं वल्लभे कृतमतौ विना प्रत्यवायमलभ्यत। वल्लभवचसा प्रोत्साहिताश्च विशिष्टा सोमनाथभक्ताः अहमहमिकया परापतन्त प्रभूत धन सञ्चीय, दर्शनीयरामणीयक मन्दिर तूर्णमेव निर्मापयामासु.। समाप्तप्राय एव मदिरे, विचारिते च शिवप्रतिष्ठामहोत्सवे,

लोहवल्लमो वल्लभ एव प्रतिष्ठापनाग्रणीर्भवति इति सर्वसम्मत्या निरणायि। किन्तु हन्त! पूर्वमेव वल्लभेन परित्यक्ते भौतिके कलेवरे तत्समानशीलेन तदा राष्ट्रपतिपद भूषयतोदारसत्वेन राजेन्द्रप्रसादेन तत्पुण्यपुण्य कर्म समन्वष्ठीयत।

## शाश्वतप्रयाणम्

१९५० ख्रिस्ताब्दस्य नवम्बरमासस्य १५ तमे दिनेऽसाध्यव्याधिना समाक्रान्ते सरदारे, सर्वोऽपि देश सचिन्तस्तत्स्वास्थ्याय जगदीश प्रार्थयत्। अनवरतकार्यभारभुग्न तच्छरीर दिने दिने विषमामेव स्थितिमभजत्। उपचारसौकर्याय स मुम्बापुरीमानीयत। किन्तु हन्त! न पुन स स्वास्थ्यमलभत। १५ तमे दिसवरदिने च सहस्रशो जनैरावृत साश्रुनेत्रै साक्रोशैश्च तैर्विक्षमाण एव नश्वर कलेवर परित्यज्य द्युसदा मार्गं प्रतस्थे। विद्युद्वेगेन प्रसृतायाञ्च दु खमय्यामस्या वार्ताया सर्वोऽपि भारतो वर्षो ग्रहग्रस्त इव सस्तब्धो विषादसमुद्रे निमग्नो बभूव। तदन्तिमयात्राया लक्षशो जना भागभागिनोऽभवन्। प्रधानामात्यादयश्च नायका तदर्थं दिल्लीत समागत्य चिरसहाय भारतमातु प्रियपुत्रममु श्रद्धाञ्जलिना अश्रुपुष्पैश्चाभिवर्षन्ति स्म।

## स्वभावविशेष

शिशोर्वल्लभस्य बाहुमूले प्रपीडको गुल्मोऽजायत। तदानी ग्रामेषु भिषक्प्राप्तिर्न सुकरा। गृहोपचारश्चास्य गुल्मस्य सुतप्तलोहदण्डेन प्रज्ज्वालन नाम। एतत्कारी नापित आहूत। स हि शिशोर्वल्लभस्य पीडाभीतो न तप्तामयोयष्टि सल्लगयितु शशाक। असकृदुक्तोऽपि स यदा तथाकर्तुं नापारयद्वल्लभ स्वयमेव तामारक्ता यष्टि गृहीत्वाऽऽगुल्मदाहमविकृतमनागुल्मेयोजयामास। बालस्यापि तस्याबालसहजा पीड क्षमता दृष्ट्वा सर्वे विस्फारितलोचना अभूवन्। प्रायशश्चास्य वज्रसार मन। अयमेव गुणस्तमग्रे भारतस्य 'लोहपुरुष' इति विरुदभाजमकरोत्।

अस्य दूरदर्शित्वमपि विस्मयावहमासीत्। चीनदेशे साम्यवादिनामाधिपत्ये जाते नेहरुमहाशय तन्मैत्रीलाभ सादरमाचकाङ्क्ष। स्वय तत्र गत तम्य-

प्रधानमंत्रिणं 'चाउ एन् लाई' नामानञ्च भारतदर्शनाय न्यमन्त्रयत्। भारत मागते तस्मिन् 'हिंदी चीनी भाई भाई'' इति लक्षकण्ठध्वनिना नभोऽपूर्यत। सरदार चीनदेशीयेषु प्रदर्श्यमानं प्रीत्यतिरेकमिमं न युक्तरूपममन्यत। स हि तेषामाधिपत्यलालसां साधु विवेद। रुग्णशय्य, गतोऽपि स नेहरुमहाशयं पत्रेण चीनीयेभ्यः सावधानतामुपादिशत् –'तिवटप्रदेशे तेषामाधिपत्यस्वीकारेण तैर्भारतभुवश्चङ्क्रमणं सम्भाव्यतेऽतः सीमाविषयः पूर्वं निर्धारणीयोऽन्यथा मित्रकञ्चुकिना तेषां सख्यं नोऽनुशयाय कल्पेत'' इत्यादि। ऋजुमतिरुदारचेताश्च नेहरूस्तदा सरदारवचःसु नास्थामभजत्। उपैक्षत च पत्रमिदम्। किन्तु हन्त! वल्लभे दिवं गते चीनशासकैः प्रदर्शिता कृतघ्नता नेहरोर्हृदयं भृशं समतापयत्। तन्निकृतिसन्तप्तश्च स हृदयव्याधिनाऽऽक्रान्तोऽचिरादेव दिव्यलोकं जगाम।

तथैव काश्मीरप्रदेशे पाकिस्तानप्रेषितैर्विलुण्ठकैर्निर्दयं विलुण्ठने प्रारब्धे तन्नृपतिर्भारतेन सहात्मसंयोगं निवेद्य शीघ्ररक्षां ययाच। देशिकनृपकार्यमन्त्री वल्लभस्तूर्णमेवोदभटभटसेनां वायुयानैः सम्प्रेष्य शार्दूलैः शृगालानिव लुण्ठकान् तान् विद्रावयितुमारभत। परन्तु हन्त! असमाप्त एव शत्रुविद्रावणे महामना नेहरुः सरदारवचोऽवमन्य कलहकथामिमां सर्वराष्ट्रसंघाय न्यवेदयत्। धूर्तमेलकवल्पः स संघस्तूर्णमेव युद्धविराममादिशत्। असमाप्तशत्रुनिबर्हणा च भारतसेना मन्त्रौषधिरूद्धवीर्या सर्पिणीव विरतव्यापारा तस्थौ। अद्य बहुतिथे काले व्यतीतेऽपि काश्मीरकलहोऽयं न शिरसि कण्टक इव कष्टायते। युद्धद्वयेन च भारतभटानां महती हानिमजनयत।

## वल्लभसुभाषितानि

(१) सुदार्घं सेविता परतन्त्रता मधुरेव जायते। पञ्जरस्थः पक्षी विसृष्टोऽपि पुनस्तदेव बन्धनागारं प्रविशति। यस्तुतो दासभावमापन्न इवान्यान् दासीकुर्वन्नपि पापभाग् भवति। दास्यभावं न्मुक्ति प्रांणवतो जनस्य ननु स्वर्गलाभमप्यतिशेते।

(२) संघभावं प्रपद्यत। आलस्यं जहीत। संशयं विहाय निर्भयं वर्तध्वम्। मिथः कलहं कातर्यञ्च दूरे कुरुत। साहसे श्रीः प्रतिवसति। दृढ-सङ्कल्पैः साहसप्रतिहतान्यवनतैश्च नरैर्न सङ्कल्पितं न किमपि दुरासदम्। योग्या एवाभीष्टं लभन्ते। भीतांश्चानर्थशतं श्लिष्यन्ति।

(३) श्रमसिद्धमन्नं भुञ्जान एव पुण्यजीवी भवति।

(४) शासनशक्तिर्निशासनादवतीर्णा। सा हि प्रजास्वायत्ता।

(५) ईश्वरे सम्बद्धस्य न कोऽप्यस्पृश्यः। सर्वं हि संसारं परमात्मना छन्नं। कथं नु तत्र कश्चिदस्पृश्यो भवेत्? ईश्वरो न केवलं प्रासादान्, अपि तु दीनानामुटजान्यप्यधिवसति।

(६) न हि क्षणमप्यनुद्यमिभिः भाव्यम्। अनुद्यमः खलु सर्वेषां पातकानां निधानम्। उद्यमादेव संयमः प्रभवति। संयमश्च सर्वसदाचाराणां सुखानाञ्च बीजम्।"

हन्त! गान्धि-नेहरुवर्यौ महोदयौ स्वसदस्यान् विकलान् विभाव्य सन्तापं दिवंगतौ। कर्मविदां वरो वल्लभस्तु स्वाभीष्टसिद्धिं पश्यन् सुखेनास्वाप्सीत्।



विचक्षणवर

# राजगोपालाचार्यः

बृहस्पतिसमो ज्ञाने नीतौ चाणक्यसदृशः।
युधिष्ठिरसमो धर्मे 'राजगोपाल' शब्दितः॥

दक्षिणभारतभूमिर्नाम धर्मतत्त्वचिन्तनपराणां कलाकोविदानां शूराणाञ्च प्रसवित्री महत्त्वशालिनी भूमिः।

बुद्धिमतां वरेण्यः श्री चक्रवर्ती राजगोपालाचार्यः १८७९ ख्रिस्ताब्दस्य डिसेम्बर मासे थोरापल्ली नाम ग्रामं स्वजनुषा भूषयामास। ग्रामोऽयं तमिलनाडु-प्रदेशस्य (तदानीं मद्रपुरीराज्यस्य) सेलम मण्डलान्तर्गतं वर्तते। मण्डल-स्यास्यैकतः मैसूर-राज्यम्, अपरतः आन्ध्रप्रदेशस्तत्र तमिलभाषया सह तत्तु

कनडभाषयोरप्यस्ति प्रचारस्तत्र। ग्राम वनश्रिया चारुदर्शन देवमन्दिरादिभिश्च विभूषित सत् कपिलमृण्मयभूम्या चेतोहर रामणीयक दधाति। वृष्टे पर्याप्तत्वात् सुलभजलत्वाच्च प्रदेशोऽत्र पुष्कला धान्यसमृद्धि जनयति, सुपुष्पफलै लतागुल्मवृक्षवनस्पतिभिश्च तत्र वसता जीवनयात्रा सुखेन सपादयति। ऋद्धिमनि तत्र ग्रामरत्ने ऋद्धिमत्तर चक्रवर्तिकुलावतसो नल्लम अय्यगराख्यो भूमिपतिर्विप्रवरोऽत्वासीत्। विष्णुभक्त स कुलपरपरामनुवर्तमानो धर्मानुष्ठानेन, शास्त्रविमर्शेन, सस्कृतवाङ्मयप्रचारेण च सदाचारसुरभि सुख गमयति स्म समयम्। लोकेषु विश्रुतकीर्तेरस्य वैदुष्य सदाचारनिष्ठा च तथाऽऽस्ता यर्थैकदा मद्रपुरराज्यपालाऽपि द्रष्टुमस्य समागत, विचारविनिमयेन चात्मान कृतकृत्य मेने।

साध्वीश्रेष्ठा शेंगारामल्लाख्याऽभवदस्य धर्मपत्नी। सा हि सर्वात्मना पतिमनुसरन्ती योषितामादर्शभूता च सती नरसिंहाचारि-श्रीनिवासेति सुतरत्नद्वय सुषुवे। तृतीयश्चास्मत्कथानायको नरमणी राजगोपालो बभूव। जनकोऽस्य बाल राज क्रोडे निवेश्य श्रावयति स्म रामायण-महाभारत-पुराणादिकथा। विस्मयविस्फारितलोचनश्चायमद्भुतानि कथाचरितान्यापीय परा मुदमवाप। पञ्चमे च हायने राज शाला प्रवेशित। गुरुबोधित च सर्व सकल सानन्द गृह्णनमन्दमेधया विस्मापयति स्म गुरुजनान्। प्राथमिकाध्ययन स्वग्रामे समाप्य समीपवर्तिनि होसुरग्राम आङ्ग्लभाषाध्ययनार्थं प्रेषित। तत्र च कक्षात्रय प्राथम्येनोत्तीर्य पुनर्बेङ्गलूरनगर जगाम। बेङ्गलूरनगरे च विचक्षणवरोऽय बालोऽद्भुतेन विद्यारसेन शिक्षकाणा मन प्रमोदयन्नुत्तमानाग्लभाषाप्रधानात्मसादकरोत्। अस्य सर्वेषु विषयेष्वनुत्तमा मेधामाकलयन् टेइट नामाऽऽङ्ग्लशिक्षकोऽव्रोवद् "राजगोपाल! त्वादृशो मेधावी यद्याङ्ग्लदेश गत्वाऽधीते महती प्रतिष्ठा लभेत। चेदिच्छसि तत्र गन्तु त्वामह शिष्यवृत्ति लम्भयेय" इति। राजस्तु सविनय प्रत्यभाषत – "अनुगृहीतोऽस्मि भवता सौहार्देन, किन्तु यद्यस्ति मे बुद्धिविभव स्वदेश एव पर्याप्ता विद्या प्रतिष्ठा

च लभेय, किमाडम्बरदेशगमनेन ? नास्ति मे विदेशगमनरुचिरिति" इति । अहो न्यस्य जन्मभूमिभक्ति । गुणतश्च स शिक्षकैरतितरां प्रशस्तोऽभवत् ।

तत उपाधिप्राप्तये वर्षद्वय मद्रासप्रेसिडेन्सी महाविद्यालयेऽधीत्याष्टादशवर्षीय एव बी ए परीक्षामुच्चगुणाढ्य पारयामास । स्वभावेन सत्यानुरोध्ययनैकव्रती राजाऽप्रतिमया प्रतिभया सर्वेषा अध्यापकाना गुरूणा सतीर्थ्याना च प्रियतमोऽभवत् ।

लब्धोपाधिरस्य मण्डलाधीशपदोपलब्धये 'आई सी एस्' परीक्षामुत्तरत्विति बुद्धिरासीदस्य पितु । किन्तु तरुणो राज तदानी वाक्कीलविद्यावता सर्वत्र प्रभावातिशय विभाव्य विधिविद्यामेवार्जितु मनो दधे । अनुमतश्च पित्रा तदर्थं पुन मद्रनगरी गत्वा विधिविद्योपाधिमप्यध्यगच्छत् ।

विंशतिवर्षस्यास्य युवा यय प्रौढाना, स्पर्धमानाना वाक्कीलाना मध्ये विराजेतेति पर्याकुल आसीत् सुतस्नेही पिता । अयञ्च मण्डलमुख्ये सेलमनगरे वाक्कीलव्यवसायमारभत । असाधारणेन बुद्धिविभवेन, अहर्निशं चानुष्ठितेनोद्योगेनाचिरादेव स कुशलो वाक्कील इति तत्र मद्रासमुख्यन्यायालये चातिरिक्तां ख्यातिमलभत ।

अथ सेलमपत्तनेऽर्जिते प्रभूते धने, लोकोपकारदक्षोऽय लोकसेवाकर्मणि व्यापृतमना बभूव । नगरपालिकानिर्वाचने च स्पर्धमानो विनाऽऽयास विजयी भूत्वा, नगरपालिकाध्यक्षपदमपि प्राप्तवान् । द्वाविंशतिवर्षस्यास्य तादृशे उच्चै पदे स्थिति सर्वेषामपि विस्मयमातनोत् । कर्मणि तत्र चिरमभ्यस्ता प्रवृद्धवयसश्च कथमय दुरूह भारमिम वहेदिति कुतूहलिन आसन् । गृहीतकार्यस्य पारगमनमेव यस्य व्रत स राजगोपालस्तु सत्यपि स्वीये कार्यातिशये, प्रतिदिन प्रातरष्टघण्टासमय एव नगरपालिकागृह जगाम । अधिकारिभ्यश्च कर्तव्यानि कार्याणि निरदिशत्, पूर्वनिर्दिष्टाना च कर्मणामनुष्ठान कृत न वेति सूक्ष्मेक्षिकया परामृशत् ।

अन्त्यजाना दुर्दशा दृष्ट्वाऽऽर्द्रमना अय तेषा समुद्धारेऽस्पृश्यतानिवारणे च कृतसंध आसीत् । तदा जलनालिकाप्रबन्धेऽन्त्यजद्वय नियुक्तमासीत् ।

विप्रप्राये पत्तनभागे जलविमोचनकर्मणि नियुक्तमनेन तदन्त्यजद्वयम्। दाक्षिणात्या विप्रा स्पृश्यास्पृश्यविचारे गृहीता इति सर्वे ते कर्मणानेन प्रकुपिता अन्त्यजयोरन्यत्र कर्मस्थिनि कारयितुमाक्रोश कृतवन्त। 'नैतद्विधिविरुद्ध-मतो नान्यथयितु शक्यम्' इत्युक्त्वा राज सर्वानपिताननुनयेन, दृढवचोभिश्च विगलितविरोधान् चकार। तथैवान्त्यजाना मनिर्वन्ध शालासु प्रवेशमपि कारितवान्। शिक्षका प्राय ब्राह्मणा। अतस्तेभ्यो नैतदरोचत। किन्तु 'हरिजनान् पाठयन्तु कार्य वा त्यजन्तु' इति दृढ प्रवाधिनाम्ले हरिजनबालान् पाठयितु समाहूयन्त हठात्। दृढमदक्षसोऽय महामतिर्विविधैरुपायै पत्तनस्य तस्यापूर्वमभ्युदय कृत्वाऽस्पृश्यतानिवारणेन सन्स्वपि केषुचित् विरुष्टेषु बहूना प्रीतिकरोऽजायत। एव वर्षद्वय यावदनुष्ठितनागरिककर्मा, नगरपालिकाकर्मणा लोकश्रेयःसपादकता कथ स्यादिति आदर्शप्रबोधक आसीत्।

अथ विवृद्धे वाक्कीलकर्मणि, तदर्थञ्च मद्रासनगरे मुख्यन्यायालयो नैकशो गन्तव्य आसीद्। येन समयशक्त्योर्व्यय परिहर्तुं, समर्थनमन्य तस्य कृते सेलमक्षेत्र लघीय इति च हेतो, स मद्रासनगरमेव वासयोग्यममन्यत। मद्रासनगर गतश्च स स्वल्प एव काले तत्रत्योच्चन्यायालयस्थानमा विधि-वेत्तेति प्रतिष्ठामलभत। सचितेन च प्रभूतधनेन तत्र स्वीय भव्य सद्म निर्ममे। सस्कारमूर्त्या च अलरमेलमङ्गम्मया विवाहमङ्गलमन्वभवत्।

## महात्मना संयोग·

राष्ट्रियमहासभाया माहात्म्य कार्यशक्ति च समेधयमानेषु विरलेषु पुरुषवरेषु राजगोपाल सविशेष स्थानमवहत्। महात्मा गाधि आफ्रिकादेशे सत्याग्रहात्मकेन नूतनेन शस्त्रेणापूर्व विजयमलभत। वीतभयस्या-हिंसकव्रतस्य त्यागमूर्तेस्तस्य कार्यकलाप श्रावश्रावं पूर्वमेव तस्मिन् दृढादर आसीद्राज। एकदा राज हिंदूपत्रसपादकस्य श्री कस्तुरीमहाभागस्य गृह गतवान् राजकीयसमस्यासचर्चयितुम्। तदा तत्रासन् आसीद् दिगन्तकीर्ति मोहनलाल गाधि। आर्जवमूर्ति राष्ट्रभक्त्युज्ज्वलहृदय च त दृष्ट्वा तेन

सह किञ्चित् सभाष्य विजितान्तरङ्गोऽभवद्राज । तत पूर्वं स तिलक-दर्शितपथमेव श्रेयसेऽकल्पयत्। किन्तु मानवप्रेममूर्तिमात्मशक्तिसवलित च महात्मान दृष्ट्वा तमेवात्मनेतारममन्यत। तदुपदेशेन च राष्ट्रियमहासभया-ऽन्वय प्राप्य ग्रामे ग्रामे सचरन्राज सत्याग्रहान्दोलनस्य प्रचारप्रवण आसीत्। विधिज्ञकार्यं विहाय द्रविणहानिञ्चाविगणय्य, स स्वातन्त्र्यव्रती बभूव। तेपु दिनेषु महात्मनाऽसहकारक्रान्ति समारब्धाऽऽसीत्। तदर्थञ्च स कारा गारे निक्षिप्त । तन प्रचाल्यमान 'यग इण्डिया' नामक साप्ताहिक सपादयितु निमन्त्रितो राजस्तत्क्षणमेवाहमदावादनगर प्राप्य पत्रसचालनभारमुररीचकार। महात्मन प्रतिमूर्तिश्चाय कौशलेन तत्कार्यं निरवर्तयत्। गुरौ महात्मनि दृढभक्तिरस्य तस्य मानस सर्वात्मना प्रविष्ट, येन विविधसमस्याना तेन कृत समाधान महात्मन एव हार्दं प्रकाशयति स्म।

तदनु राजगोपालो महासभाकार्ये सर्वात्मना निममज्ज। महात्मनोऽभिमत रचनात्मक कार्यमपरिमितेन धैर्येण श्रमेण च स निर्वहति स्म। तदीयासहकार-भ्राते स्वरूप च तत्र तत्र प्रभञ्जन इव परिप न् प्रबोधयति स्म।

महात्मनि कारागृहस्थिते, सत्याग्रहप्रवृत्तौ च स्थगितायां, चित्तरञ्जन-मोतिलाल-प्रभृतयो लोकनेतार गयापत्तने महासभाधिवेशनमापादितवन्त। तत्र च ते 'शासकीयविधिमण्डले प्रवेश कर्तव्यो येनान्त प्रविष्टा वय शासन-विरोध कुर्वन्त स्वाराज्यसिद्धये प्रवतिष्यामह' इति महात्मनोऽनभिमत मार्ग-मङ्गीकर्तुं कृतसङ्कल्पा अभूवन्। राजगोपालस्तत्र साभिप्राय गत। महात्मनि कारास्थिते तन्मतस्यावमानना, तेन निरर्थकत्वेन मतस्य च मार्ग-स्यावलवना इति द्वयमपि निन्द्यममन्यत स। अत सत्यपि प्रथितयशसा विरोधेऽप्य गाधिमत तर्कपुष्ट्या वाचा विदग्धतया च तथा समर्थयामास यथा दासादीना प्रस्ताव प्रतिहतो बभूव।

कारागाराद् विसृष्टस्य महात्मन शासकश्रेष्ठेन (Viceroy) इरविन महोदयेन सधिचर्चाऽभवत्। तत्रापि राज सविशेष साह्य व्यतनोत्। अस्य कुशाग्रा धी, दूरदर्शिता च वस्तुतस्तत्त्वनिर्धारणे नितरां विश्वस्ते अभूताम्।

## मद्रास–मुख्यमंत्री

महासभाया प्रादेशिकानि मन्त्रिमण्डलानि निर्मातु कृताध्यवसायाया, निर्वाचनकर्मणि जय लब्धु नेतार सपरिकरबन्धा प्रावर्तन्त । राजाजी-महोदयस्य प्रभावातिशयेन, प्रचारपाटवेन, अविश्रम च प्रयत्नेन, मद्रासप्रदेशे सर्वाधिकोऽभवद्महासभाया जय । मद्रास–विधानसभाया च प्रमुखपक्षस्य नेतृत्वेनाव्रियत राज स्वपक्षीयै । अथ सो मुख्यमन्त्रिपदमङ्गीकृत्य, तज्ज्ञाना सेवैकव्रतिना मन्त्रिमण्डल विरच्य च, लोककल्याणाय निर्धारित स्वपक्षाध्य-वसाय कार्यपथ नेतु कृतसङ्कल्पोऽवर्तत ।

मुख्यमन्त्रिपदमलङ्कुर्वाणो राज गृहविभाग स्वाधीनमकरोत् । तत्र च विभाग उत्कोचग्राहिषु धृतदण्ड स आङ्ग्ल रक्षकाधिपति (पोलिस कमिश्नर) स्वस्य धनसग्रह निवेदयितुमाज्ञापयत् । गर्विष्ठ स पदाहत फणीवाज्ञा ता तृणाय मत्वा तदानीन्तनमाङ्गलराज्यपालमुपसृत्य मुख्यमन्त्रिण राज स्वकार्य-बाधातो निवारयितुमन्वनयत् । राजगोपालस्य प्राभव जानानो राज्यपाल आत्मनस्तथाकरणेऽसामार्थ्य प्राकाशयत् । गलितगर्वोऽनन्यगतिश्च स आङ्गला-धिकारी स्वाधिकार परित्यज्य पलायाबभूव । राज किल शुभकर्मव्यापृतो नान्यै कृतमुपरोधमसहत । येन स्वार्थसाधनेच्छवस्तमभिनिवेशिनममन्यन्त । महात्मनाऽऽरब्धान् रचनात्मकान् कार्यकलापान् परिपापयितु स सर्वात्मनोद्युक्त आसीत् । तदा मद्यनिषेध , स्वदेशवस्तूनामुपयोग , अन्त्यजाना स्थितिसुधारणा, अस्पृश्यतानिवारण, हिन्दीभाषाप्रचार इत्येते कार्यकलापा मद्रप्रदेशे सर्वातिशयेन कार्यान्विता अभूवन् । आङ्गलाधिकारिणा वेतनानि समधिकान्यासन् । तानि लघूकृतानि, नीचैर्वर्तमानाना च कर्मकराणा वृद्धि गमितानि । अत्यधिक कुसीदग्राहिणा कुसीदमात्रा ह्रसिता । एतत्सर्व बहूना त्रोधायाकल्पत । किन्तु स्वच्छशीलस्य, परिमितव्ययस्य, महामतेरस्य लोकश्रेय प्रवृत्ति प्रतिरोद्धु न कोऽपि प्राभवत् । स्थितोऽपि महति पदे स स्वीयानि वस्त्राणि स्वय क्षाल-यामास । चाणक्यचतुरश्चाय सामान्यजन इव सरल विलासविहीन च जीवनमभजत् ।

# कण्टकितमार्गप्रयाणम्

अथ द्वितीय महायुद्ध प्रारब्धम्। आङ्ग्ला यदि स्वाराज्यदान न प्रति जानते तर्हि न युद्धसाह्य करणीयमिति निश्चित्य, आङ्ग्लेषु तथाऽकुर्वत्सु महासभामन्त्रिभि स्वानि स्वान्यधिकारपदानि परित्यक्तानि। तत युद्धविरोधाय व्यक्तिश सत्याग्रह आद्रियत। राज सत्याग्रहवृत तथा कुर्वाण कारा प्रेषित। पुनश्च ततो विसृष्ट क्रिप्समण्डलेन पुरस्कृता योजना स्वीकर्तुं महासभा विज्ञापयामास। मुस्लिमसघेन च सह सगतिमावश्यकी मत्वा तैर्याचितस्य पाकिस्तानराज्यस्य तत्तत्प्रदेशलोकाना मतानि विभाव्य स्वीकारोऽन्ययाभावो वानुमन्तव्य इति स्वीय विचारपूत मतमख्यापयत्। आङ्ग्लाना युद्धयत्नेषु महासभया साह्य कर्तव्य शासनधुरा च स्वायत्तीकर्तव्येति च निवेदित तेन स्वाभिप्राय। नैतत्सर्वमरोचत महासभानायकेभ्य। दूरदृष्टया पुरस्कृतानिमानभ्युपगमान् अन्यथा कल्पयन्तोऽनेके भारतीया 'देशद्रोही खलु राजगोपाल, कारागारगमनाद्बिभ्यदय शासनेन सधि कामयते' इत्यादिभर्त्सनाभूयिष्ठानि वचनानि श्रावयन्ति स्म सर्वत्र। महात्मनि दृढभक्तिरपि राजाजी स्वीय चिन्तनपूत तद्विरोधि मत निर्भीक प्रकाशयति स्म। क्रोधताम्रेष्वपि मित्रेषु सोऽविचलितमना स्वाभिप्राय बोधयितुमनारत प्रावर्तत। न च क्रोधस्यावेगस्य च लेशोऽपि तमस्पृशत्। अन्ते च नैकवर्षं श्रमबिन्दुभि सिक्ता सवर्धिता च महासभा परित्याजयितु कटुसत्यभाषी स निरबध्यत।

अथ 'आङ्ग्ला भारत त्यजत' इति घोषणापूर्वक ससाहसमारब्ध चरम सग्रामो महासभया। मुम्बापुर्यमितदर्शमयोजिते सम्मेलने, ध्वानिते च सग्रामनादे, महात्मप्रमुखा प्राय सर्वे महासभाग्रण्य १९४२ खिस्ताब्दस्य अगस्तस्याष्टम्या मध्यरात्रावेव सुप्तप्रबोधिता कारागार प्रेषिता। सखिषु सर्वेषु कारा प्रविष्टेषु 'राज' नून भृश सतप्तमना बभूव। प्रलाभितोऽपि स न शासनपक्षपाती बभूव, नापि महासभाविरोध युक्तरूपममन्यत।

अथ कारागाराद्विमुक्त महात्मानमपश्यद्राज। मुस्लिमनेतार जिन्नानामान मिलित्वा, सनि सभवे तेन सधायाङ्ग्लेभ्य स्वातन्त्र्यमधिगन्तव्यमित्यु-

पदिश्य, स महात्मनो झिन्नामहाशयस्य च सम्मन्त्रणामायोजयामास। राजगोपालेन पुरस्कृता विभाजनयोजनामाश्रित्यासीन्मन्त्रणा। किन्तु हन्त! दुरभिनिविष्टेन मुस्लिमनायकेन विफलीकृत स सन्धिप्रस्ताव।

यद्यपि मतभेदे महात्मनो राजगोपालस्य च परस्पर समादर पूर्ववदवानुवर्तमान आसीत्। किन्तु हन्त! मद्रप्रदेशे पूर्वं यस्यानुपम सम्मान, यश्चेश्वर इवापूज्यत तत्रैव तस्यैव राजगोपालस्य भूयसी निन्दा प्रावर्तत।

निन्दकानामग्रणी श्री कामराजो राजविरुद्ध बहु प्रललाप। अय निन्दाव्यवहारो महात्मना नैकवार लेखैर्भर्त्सित। राजगोपालस्य शुभ्र निष्कलङ्क च चरित्र, पारदर्शिनी प्रज्ञा, अनुपमा राष्ट्रभक्तिश्च गुणपक्षपातिना महात्मना सोपपत्ति प्रशसिता। 'लोकोत्तराणा चेतासि को हि विज्ञातुमर्हति'।

## उच्चपदप्राप्ति

विमुक्तेषु महासभानेतृषु क्रिप्सयोजनायाञ्चास्वीकृतायां, शासकवरेण ावेलमहाशयेन निर्मिते मन्त्रिमण्डले, मन्त्रिमण्डलाग्रणी श्री जवाहरलाल. ानुनय राज मन्त्रिमण्डलेऽन्तरभावयत्। तस्य प्रकृष्टधीषणा कार्यदक्षताञ्च र्वेऽपि सादर समभावयन्। स च काश्चिन्मासान् मन्त्रिपदमुदवहत्। तत गश्चिमवगस्य राज्यपालपद लम्भित। तत्र हि प्रदेशे पूर्वशासनेन भृश सतापिता हिन्दवो यवनेषु, पाकिस्ताने जाता, बद्धरोषा वैरबुद्ध्या हिंसाताण्डवमारभेरन्नित्यासीद्भीति। यवनेषु विश्वासमुत्पादय, हिन्दूना रोषनिर्वापणमिति द्वय ससाध्य, तेषु भ्रातृभावोत्मेष च समुद्भाव्य, प्रदेशकल्याणाय जना योजनीया इति दुर्गमे कर्मणि कुशलमती राज एव सक्षम स्यादित्यासीन्नेहरुप्रभृतीना मति। राज किल तत्र गत्वा केषाञ्चिद्विरोधिनाञ्च मन साधुभावेन सतर्प्य, सर्वेषा सौहार्दं घटयितु प्राभवत्। आर्जवपूर्णो व्यवहार, विचारहेनावपि अनाकुला प्रकृतिरिति शस्त्रद्वयेन समिद्धास्य शत्रूनपि मित्रतामनैषीत्।

भारतशासकवरे माउन्टबेटने पद त्यक्त्वा स्वदश गन्तुमनसि, को नु तत्सर्वोच्चपद सारस्येन निर्वहेदित्यासीद्वितर्क। तत्र नेहरुमाउन्टबेटनयो.

प्रवृत्ते विमर्शे, श्रीराजगोपाल एव सर्वतोऽनुरूप पुरुषर्षभ इति निर्णय आसीत्। महात्मप्रमुखा अन्येऽप्यभ्युपगममिमं सर्वात्मनाऽभ्यनन्दन्। आहूतश्च सबहुमान राज पदमेतद्विभूषयितुम्। वृत्तेऽस्मिन् प्रचारमुपगते, देशे विदेशेषु च समे तज्ज्ञा हर्षतुन्दिला अभूवन्। अनुरूपे पदेऽनुरूपस्य पुरुषसत्तमस्य नियोगार्थं च ते प्रधानामात्यमभिनन्दन्ति स्म। जागतिकानि सर्वाणि वृत्तपत्राण्यप्यैकमत्येन निर्णयमिमं प्रशशसु।

देहल्या देशशासकोत्तमस्य प्रासादोऽतीव पृथुलोऽभवत्। स्वभावेन सरलो राजोऽस्य स्वल्पमेव भाग स्वस्मै निर्धार्याऽवशिष्ट कार्यान्तरेभ्योऽर्पयामास। निर्धारितस्य वेतनस्यापि चतुर्थमेवाश जग्राह। तुच्छा अपि कर्मकरा तेन कुटुम्बपुरुषा इव स्नेहेन समादरेण च दृष्टा। स खलु वास्तविको महात्मशिष्य इति सर्वे विना वैमत्य प्रतिपेदिरे। राज्यपालाधिपपदमलङ्कुर्वाण स मन्त्रि-मण्डल प्राप्तकालेनोपदेशेन, जनता सस्कारशीलसवर्धनाय प्रचोदनेन, देशनृपाश्च कालानुरूपप्रजास्वातन्त्र्यप्रदानोपदेशेन च, राष्ट्रकल्याणवर्त्मनि प्रावर्तयत।

## साहित्यरचनाः

भारतस्य नवीनसविधाने विरचिते, श्रीमति **राजेन्द्रप्रसादे** च प्रथमराष्ट्र-पतिपद प्रापिते, राज तदुच्चपद विहाय निवृत्तिमुखमनुभवितु सरस्वती च समुपासितुमियेष। किन्तु हन्त! नासीद्युक्ततमस्य प्रतिभापुञ्जस्य च तस्य निर्वृत्ति। मद्रासराज्ये विकटशासने जाते, स एव तच्छासनधुर यथावन्निर्वोढु पारयेदित्यभ्युपगमेन वरिष्ठै स चिरन्यक्त मद्रासमुख्यमन्त्रिपद पुन सानुनय ग्राहित। तच्च कार्यं स परमवैचक्षण्येन साधयामास।

बाल्य एव पितु सकाशात् सुरगिरा समधीतवताऽस्यासीन्महती प्रीति भारतीये वाङ्मये, तदनुप्राणित च शुभसस्कृतिनिधौ। कारागार गतेन च तेन, उपनिषद, रामायण, महाभारतमित्यादिग्रथरत्नानि सम्यगधीत्य, तदनुवाद-प्रवचनादीनि कृतानि पूर्वम्। अथेदानीं विचारपरिपाकं प्राप्ताऽय महामति भारतीयधर्मदर्शनादीना सेवामेवोत्तममुद्योगममन्यत। तदर्थं च प्राचीन-

ग्रथानुवाद तानाश्रित्य स्वतन्त्ररचनाश्च वर्तमुररीचकार। बहुश तामिल-भापायाम्, अल्पतश्चाङ्गलभापाया तदीया नानाविषया रचना प्रकाश गता या पठन्त सहृदया परा मुदमवापु । कथामिषेणोपदेशकरणेऽस्य पाटवमनुपमम्। अनया रीत्या च स स्वाभिप्राय हृद्य मर्मस्पर्शिन च व्यदधात्। उपनिषद्–गीता–रामायण–महाभारतान्याश्रित्यानेन कृता रचना लक्षशो जनाना चेत आवर्जयन्ति, परिशोधयन्ति च मनासि।

## विश्वशांतिदूतः

शासकश्रेष्ठे, महासभावरिष्ठे च नेहरुमहाशये साम्यवादरीतिरोचिष्णौ जाते, तत्प्रतिरुध्य जनस्वातत्र्यरक्षार्थं पुनरपि बद्धपरिकरो जात राज । स हि 'स्वतन्त्र पक्ष' इति राजकीयपक्ष घटयित्वा तद्द्वारा प्रचारभाषणै, 'स्वराज'-नाम्नि स्वप्रचालिते सामयिके च नैकैर्लेखै , व्यक्तिस्वातन्त्र्यरक्षार्थं भूरि प्रायतत। राज्यायत्तवाणिज्य, राज्यायत्ता उद्योगा, राज्यशासकाना मुखमवलोक्यैव स्वस्य देशविदेशेषु गतागत, विविधवस्तूना प्राप्तिरित्येतत् सर्वं व्यक्तिस्वातन्त्र्य प्रतिबन्धानि, अधिकारिणाञ्च प्रभुत्वमनर्गल करोति। उत्कोचायनिष्टान्यप्येतदेव जनयति–इत्यासीदस्य प्रकोपबीजम्। एतद्बुद्धिविभवानुगृहीत 'स्वतन्त्रपक्ष' केषुचित् प्रदेशेषु विशिष्ट प्राभवमविन्दत, ओरिसाप्रदेशे च मन्त्रिमण्डलमपि रचयितु शशाक। अथ अमेरिका रुमादीना आणविकास्त्राणा निरङ्कुशोऽभिवर्धनव्यापारे प्रवृद्धे, प्राणिसर्गस्य विध्वसमाशङ्कमाना नरोत्तमा व्यग्रमनस आसन्। राजगोपालस्तु कथङ्कार मनुष्यस्याय वानरव्यवसायो निरोद्धव्य इति तच्चिन्तामन्तानावृत समजायत। कैश्चिन्मित्रै प्रार्थितश्च स प्रबलतमराष्ट्रस्य अमरिकाख्यस्याधीश द्रष्टु कृतसङ्कल्पो बभूव। त्रिचतुरै समानशीलै सहितश्च स अमेरिकाराष्ट्र गत्वा तद्राष्ट्रपति पुण्यश्लोक केनेडी महाशयमपश्यत्। जगद्रक्षार्थं अण्वस्त्रस्फोट प्रयोगार्थमपि परिहर्तव्य इति च त विशदार्थै, हृदयस्पर्शिभिर्वचोभिर्विज्ञापयामास। वार्धकक्षीणे, दुर्बलेऽपि काये कीदृशो बुद्धिविभव ! कीदृशी च सर्वभूतहितरतिरिति विमृशन् केनेडी-महाशयस्तस्मिन् प्ररूढभक्ति मन् सबहुमान सश्रद्धञ्च तमाद्रियत।

# स्वातंत्र्यरक्षावीरः

स्वातन्त्र्यलाभात्परं विशेषतश्च महात्मनो निर्वाणादनन्तरं, राष्ट्रहिताय पूर्वं त्यक्तसर्वस्वा लोकनायका स्वातन्त्र्यगैरिकाश्च उच्चैः पदलिप्सया विभव-वाञ्छया च ग्रस्ता नीतिनियमान् सदाचारान् किमुत राष्ट्रहितमप्यवजानन्तीति दर्शंदर्शं नितरामुद्विजते स्म राजगोपालस्य चेत । युवानस्तु सदाचारमूला संस्कृतिं धर्मञ्चोपेक्ष्य पाश्चात्यैरादृता भोगवृत्तिं समाश्रयन्ते, देशश्रद्धाशून्या, धर्मे शीले चास्थारहिता निरुद्देशं मोहभूयिष्ठं च जीवनं यापयन्तीति सुतरां स व्यग्रमना अभूत्। एता दुरवस्था प्रतिरोद्धुं सोऽनेकैरुपायै प्रायतत। 'दैवी-संपदमनादृत्यासुरीं संपदमुपासानानां पतनं पारवश्यञ्चावश्यभावि-इत्य-संदिग्धमनारतञ्च स प्रतिपादयामास। भारतस्य ग्रामेषु वसन्त' कोटिशो जना धर्मश्रद्धया, परमात्मनिष्ठया, पूर्वजेषु प्रीत्या च श्रमक्लिष्टं दारिद्र्यदुःखितं च जीवनं यापयन्ति। तेषां जीवनरीतिं निन्दन्तो नागरिका तेषां श्रमादुद्भूता-न्येव भोगसाधनानि विनियुञ्जते, इति न विस्मर्तव्यम्। सामान्यजनेषु समत्व-बुद्धिः समादर एव च राष्ट्रभक्ते प्रमाणम्। आत्मानं गान्धेरनुयायिनं ख्यापयन् जनो यदि तेन पुरस्कृतान् त्याग-सेवा-सारल्य-सत्य-अहिंसादीन् गुणान् नाद्रियते, न चताननुष्ठानपथं प्रापयति, तर्हि तस्य वाङ्मयी गान्धिनिष्ठा प्रतारणैव मिथ्यावाद एव दम्भ एव च" इत्यादिकठोरवचोभिर्निनिन्द गोपाल स्वार्थसाधन-रतान् राजकीयकार्यकर्तॄन्।

"स्त्रिय पुरुषा इव ज्ञानविज्ञाननिष्णाता भवन्तु, राष्ट्रस्य विविधेषु कर्मसु मूर्धन्यं स्थानं च वहन्तु, किन्तु यदि ता पत्नीभावे मातृत्वे चाकुशला, परिवार-पोषणे शिशुषु संस्कारसेचने चादक्षा, तर्हि स्वकर्तव्यभ्रष्टा एव ता इति निश्चित्य, ताभी राष्ट्रस्य समाजस्य च श्रेय सिद्धचतीति नाहं मन्ये" इति स्त्रिय उपदिदेश। एवं स्वातन्त्र्यलाभात् परमपि भारतमातरं बह्वीभिर्विधाभि सेवमानो विपश्चिदपश्चिमं पुरुषर्षभोऽयं १९७२ ख्रिस्ताब्दस्य दिसंबरमासस्य २५ दिनाङ्के चिरमुपासितं विश्वेशपादपद्मं जगाम। विरते च तस्य भौतिके जीवने न केवलं भारतमेवापि तु समग्रमपि विश्वं भारतमातुः पुत्ररत्नाया-स्मावश्रुसमन्वितं निवापाञ्जलिं समर्पयामास।

एवमन्तिमशताब्दे भारतनभसि प्रादुर्भूतेषु प्रदीप्तनक्षत्रेषु भास्वरतरं नक्षत्रमिदं नामशेषतां जगाम।



# सर्वपल्ली राधाकृष्णः

तत्त्वज्ञानां वरेण्याय वाङ्मिने विश्ववंधवे ।
प्रदीप्ताध्यात्मदीपाय राधाकृष्णाय ते नम· ॥

अष्टादशशताब्दे भारतवर्षे वैदेशिकाना विशेषतश्च आङ्ग्लाना संस्कृति-साहित्य-विचारा दृढमाक्रमन्त । तत्पूर्वं इस्लामधर्मीयाणामत्र चिराय स्थिनिरासीत् । किन्तु तद्धर्मीयाणा बहुसङ्ख्याकाना शासकानामितरमतासहिष्णुतया हिंदुधर्मस्थानाना प्रदूषण-विभञ्जनपरतया, तैर्बलात् कृतया स्वधर्मप्रसारण-प्रवृत्त्या च भीतभीता इव तत्संसर्गपराङ्मुखा अवर्तन्त हिन्दव । केचन 'सुफि' मतानुयायिन इस्लामधर्मिण सर्वधर्मसहिष्णुतामुपादिशन्, धर्मस्य बाह्यभेदमुपेक्ष्य तत्त्वैकताञ्च पुरश्चक्रु, किन्तु शासकाना पीडनपरेषु व्यापारेषु जाग्रत्सु नेतरधर्मानुयायिनी जनता मुस्लिमससर्गाय समुत्सुकाऽभवत् । परतु पाश्चात्याना व्यवहार तद्विलक्षण एवासीत् । ते हि विभिन्नजाति-ज्ञातिविभिन्नात् हिन्दू-

समाजाद् हीनत्वेनावमतान् दारिद्र्यपदष्टान्वा स्वगमवाये प्रवेशयितु ममुमुत्रा सन्तोऽपि मृदूपायैरेव तत्सिद्धि युक्तरूपामाकलयम्। भारतीय साहित्य दर्शनानि यत्नाश्च यथावदधीत्य त तद्गतमुल्यं प्राणगन्, तद्वृद्ये च सबहुमान प्रावर्तन्त। अन्यच्च, पाश्चात्याना सामजिकी विशारदृष्टि, लोकतन्त्रप्रधाना राज्यव्यवस्था, विज्ञानविदग्धता, नवनवोन्मेषशालिनी प्रज्ञा, इत्येतत्सर्वं रूढिग्रस्त सुदीर्घदास्येन विचारदैन्यमापन्नञ्च हिन्दूसमाजमनिशन इत्यभावयन् नवशिक्षादीक्षिता युवान। अथ चाङ्गलेपु केचन पौर्वात्यविद्याविभूपिता विपश्चितो भारतीयवाङ्मयरत्नानि सुपरिभाव्य, तानि नवीनया दृष्ट्या समालोच्य प्रकाशयामासु, आङ्गलभापामुखेन च विदेशेषु तत्प्रचारप्रवणा अपि बभूवु। तेषा वाङ्मयविशेषपरिचयश्च नवशिक्षादीक्षिताना भारतीयाना नवीनमेव विचारोन्मेष जनयामास। एव परस्परविचारविनिमयेन संस्कारधर्म-दर्शनादितुलनाप्रसूतो नवीन एव दृष्टिसमन्वय प्रादुरभवत्। अय सस्कृतिसगम ख्रिस्तधर्मपक्षपातमप्यजनयत् केपुचिद्युवसु। तथापि भारतीयस्य प्राचीनवाङ्मयस्य नवीनदृष्ट्या विमर्शो बहूना तत्र नवीनामास्थामपि उदभावयत्। एकतो राजा राममोहनरायप्रभृतय ख्रिस्तवैदिकधर्मयो समन्वयात्मक धर्ममुपादिशन्। अपरतश्च साक्षात्कृतधर्मतत्त्वेन परमहसेन रामकृष्णेन प्रबोधिततत्त्वा विवेकानन्दादय वैदिकधर्मस्य वेदान्तस्य च सर्वसग्राहि स्वरूप प्रकाशयामासु। सेय प्रणालिरद्याप्यबाधिताऽनुवर्तते। उत्साहमूर्ते विवेकानन्दात् पर विदेशेषु भारतीयतत्त्वदृष्टे समर्थ परिचायकोऽभवत् तत्त्वविदा वरेण्य, उद्भटश्च वाग्मी सर्वपल्ली राधाकृष्ण। अय किल महानुभाव १८८८ ख्रिस्ताब्दे सप्टेम्बरमासस्य पञ्चमतिथौ मद्रप्रदेशे तिरुत्तनि ग्रामे जनि लेभे।

## शिक्षाप्राप्ति

अनेन प्राथमिकी शिक्षा विख्याततीर्थस्थले तिरुपतौ वेलोरपत्तने च सपादिता। सम्पन्नमाध्यमिकशिक्षश्च मद्रपुरे ख्रिस्तमहाविद्यालय उच्चशिक्षामधिजगाम। मद्रासविश्वविद्यालयस्य च एम् ए उपाधिमविन्दत। एक-

तदा कलकत्ताविश्वविद्यालयस्य प्राग्रह उपकुलपति मेधाविश्रेष्ठ आशुतोष मुखर्जी प्राध्यापकश्रेष्ठाना सग्रहे व्यग्र आसीत्। अल्प एव वयसि दिगन्तव्याप्तकीर्ति राधाकृष्ण स स्वविश्वविद्यालये तत्त्वज्ञानविभागाध्यक्षपदाय न्यमन्त्रयत्। तच्चाङ्गीकृत्य पूर्वं दश वर्षाणि पश्चाच्च चत्वारि वर्षाणि तत्र विद्यावितरणपरो बभूव। महापण्डितस्यास्य विषयपारीणता विवेचनापाटवं, पौरस्त्यपाश्चात्यविद्याशाखाना मार्मिकमध्ययनम्, अनुपम मेधाविलसितं चैते गुणा सर्वत्र दिक्षु तद्यश सौरभ प्रसारयामासु। येनासौ दर्शनपरिषद सदस्यत्व लम्भित स तस्या सुबापुर्यधिवेशनस्याध्यक्ष्य प्रापित।

राधाकृष्ण किलात्मप्रत्ययवान् महानुभाव आसीत्। एकदा सच्छिष्यो-ऽन्यतमस्त 'ओक्सफर्ड' विश्वविद्यालयस्यान्तेवासित्वमुपगम्योपाधिविशेष-लाभाय न्यवेदयत्। स हि प्रत्यभाषत –"नूनं गमिष्यामि तं विश्वविद्यालयं किन्तु न शिष्यभावेन, अपि तु शिक्षकत्वेनैव" इति। स च तस्मात्पश्चात्य पट्स्वेव वर्षेषु फलेग्रही समभवत्। स हि तत्र सबहुमान भारतीयदर्शनाध्यापक-पदमलङ्कर्तुं न्यमन्त्र्यत।

विश्वव्याप्तयशा सरस्वत्या प्रियपुत्रोऽयं विविधेषु विदेशेषु तत्त्व-सबंधिनो विषयान् व्याख्यातु प्रार्थितोऽभवत्। येन 'ओक्सफर्ड' विश्वविद्याल-यान्वयिनि 'माञ्चेस्टर महाविद्यालये' 'उपटोन'–'व्याख्यानानि', 'हिबर्ट

विश्वविद्यालये सर्वधर्मतुलनात्मकानि 'हृम्बेन' व्याख्यानानि, लण्डनस्थे विश्वविद्यालयमहाविद्यालये च 'हृबर्ट' व्याख्यानानि चकार। १९२१ ख्रिस्ताब्द यावत्तेन कृतेषु तेषु व्याख्यानेषु विचारवैशद्य, प्रमेयस्य मर्मावगाहि निरूपण, जान्हवीप्रवाहमनुकुर्वश्चास्खलितो वाक्प्रवाह, श्रोतृणा कर्णोत्सवायाकल्पन्त। एतादृशानि गौरवशालीनि व्याख्यानानि वितरितु नान्यो भारतीयो निमित्त आसीत् पूर्वम्।

आन्ध्रप्रदेशे 'वाल्टेर'पत्तन इदप्रथमतया स्थापितस्य विश्वविद्यालयस्योपकुलपतिपद स्वीकर्तुं प्रार्थितो राधाकृष्ण १९३१ ख्रिस्ताब्दात् पञ्च वर्षाणि यावत् तन्नियोग सगौरवमुवाह। स हि न केवलमध्यापनेऽपि तु शासनकर्मण्यपि परमा प्रज्ञा प्राकाशयत्।

ततश्च प्रतिभापुञ्ज स 'ऑक्सफर्ड' विश्वविद्यालयेन सबहुमान निमन्त्रितस्तत्र पौरस्त्यधर्म-सदाचार-विषयप्राध्यापकोऽभवत्। भारतीयेषु तादृश सम्मान स सर्वप्रथमतयाऽलभत। प्रतिवर्ष षण्मासान् कार्यमिद निर्वर्तयन् स कार्यान्तराण्यपि कुर्वाण आसीत्। तत स १९३९ ख्रिस्ताब्दे महामनसा मदनमोहनमालवीयेन स्वप्रतिष्ठापितस्य काशी हिन्दुविश्वविद्यालयस्योपकुलपतिपदमङ्गीकर्तुं प्रार्थ्यत। तेषु दिनेषु विश्वविद्यालयस्य तस्यार्थिकी व्यवस्थासबन्धिनी च स्थितिर्न सुचारु प्रावर्तत। अत्युदारमना मालवीयश्च तन्निमित्त चिन्तामन्वभवत्। नव वर्षाणि तत्कार्यभारमुद्वहन् विपश्चिद्वरो कार्यपटुश्च राधाकृष्णो दुरवस्था ता निवर्त्य साधीयसी स्थितिं जनयामास।

## राजकीयप्रवृत्ति

अध्यापनविचक्षणा प्रायो राजकीयप्रवृत्ति न रोचयन्ते। रोचयन्तोऽपि न तत्र साफल्यमश्नुवन्तीति बहुधा दृष्टचरम्। किन्तु हन्त, मतिमता वरो राधाकृष्णस्तत्रापवाद प्रमाणयति। भारतप्रधानामात्यो नेहरू, तत्त्वविदुत्तमस्यास्य सर्वतोमुखी प्रतिभा प्रमीय त रूसदेशे भारतस्य राजदूतकर्मणि नियोजयामास। स च नियोगस्तेनापूर्वया बुद्धिमत्तया निर्व्यूढ। लोहहृदय रूस-

शासक. स्तालिनो न कदापि राजदूतान्तराणि साक्षात्कारायाजुहाव। राधा-कृष्णस्य भूयो भूय कर्णपथप्राप्तया कीर्त्या प्रचोदित स त सबहुमानमाजुहाव। सस्मितमुपसृतो राधाकृष्णस्तु त सौहार्देन मुखे चिबुके च परामृशत्। अननुभूतपूर्वेणामुनात्मभावेन द्रवितहृदय साश्रुनेत्रश्च स सगद्गदमुवाच – सर्वे जना मा राक्षसं मन्वाना मत्तो बिभ्यति। भवानेक एव मा मनुज मत्त्वाऽऽत्मभावेन पश्यति। भवतो स्नेहस्निग्धेन व्यवहारेणानेन नून प्रहृष्ट मे हृदयम्। आजीवन भवतः सौहार्दमिदं न विस्मरिष्यामि। इतो गच्छतो भवतो विरहो नूनं मा विषादयति।" इति। श्रूयते यत्पुरा मुनीनामाश्रमपदेषु व्याघ्रादयो हिंस्रा निसर्गसिद्धा क्रूरता विहाय साधुभावेनावर्तन्त। कोटिशो जनान् क्रूर यमसदन योऽप्रेषयत् तस्तलोक म स्तालिन श्वापदेभ्योऽपि खलु क्रूरतर। तस्यापि हृदयद्रावण राधाकृष्णस्य वै मुनिवरत्वमेव प्रमाणयति। "अहिंसाप्रतिष्ठाया सर्वभूतवैरत्यागः" इति नु स्मारिता स्मो वय पातञ्जलस्य योग-सूत्रस्य प्रसङ्गेनानेन।

रूसदेशात् प्रतिनिवृत्तो राधाकृष्णो भारतस्योपराष्ट्रपतिपद प्रापित। तत्पदान्वयेन च स भारतीयराज्यसभाया कार्याध्यक्ष्यमध्यक्करोत्। तदा देहलीविश्वविद्यालयस्य च कुलपतिपदमपि महर्ष नववर्षाण्युवाह।

## राष्ट्रसंघसंबंधः

प्रतिभापुञ्जो राधाकृष्णो द्वितीयाद्विश्वयुद्धात् पूर्वं प्रवर्तितस्य राष्ट्रसघस्य (League of Nations) 'सर्वराष्ट्रियबुद्धिमत्सघ'स्य सदस्यत्वमभज-दष्टवर्षान्। युद्धात्परञ्च नवीनराष्ट्रसघस्य शिक्षाविभागे (UNESCO) भारतीयप्रतिनिधिमण्डलस्याग्रणीर्भूत्वाऽष्टवर्षाणि य वद् भागभागभवत्। वर्ष-चतुष्टय च तद्विभागाध्यक्ष्य कुर्वन् समेषा सवधिना प्रशसापात्रमभूत्।

१९५६ क्रिस्ताब्दे भारतोपराष्ट्रपतिपदभाक् स नैकान् विदेशान् गत्वा भारते तेषा मैत्री प्रीतिञ्चोदपादयत्। मासद्वयव्यापिनी तद्विदेशयात्रा कुर्वन् स बेलजियम्–पोलैंड–चेकोस्लोवेकिया–रशिया–हंगेरी–बल्गेरिया – आफ्रिका-

खण्डस्य मध्यपूर्वभागौ च जगाम। पुनश्च तस्मिन्नेव वर्षे सिंगापोर–इंदोनेशिया–जापान–चीनदेशानव्रजत्। भारतस्य निसर्गसिद्ध सास्कृतिकदूत स तत्समनन्तरहायने पुनर्देशान्तरेषु सचरन्, हिंदीचीन–चीन–मागोलिया–हाग-कागदेशान् स्वोपस्थित्याऽमोदयत्। वर्षद्वयात्परञ्च 'होनोलुलु' नगरे सम्पन्ने प्राच्य-अर्वाच्यदर्शनसम्मेलने भागभागी भूत्वा तत अमेरिकाराष्ट्रमगच्छत्। ततो जर्मनदेशमाङ्गलदेशञ्च पर्यट्य 'पेरिस'नगरे सपद्यमानाया 'युनेस्को' सभाया समन्वयमलभत।

विश्वस्य सर्वत्र दिक्कोणेषु परिव्रजन् स भारतीयामुदात्ता सांस्कृतिकी दृष्टि, निष्पक्षा सर्वशान्तिदायिनी राजनीति चोदबोधयत्।

अजस्र स्फुट न्यवेदयत् स यद् "यथा यथा विज्ञान विसृमर भवति, यथा यथा च यातायातोपकरणाना प्रजवित्व सर्वगामित्व च सपद्यते तथा तथा निखिला अपि पृथ्वीगता देशा एककुटुम्बभाव भजन्ति। नियतिकृतेय स्थितिरनिच्छताऽपि जनेनाङ्गीकार्यैव। विश्वबन्धुभावना पुरस्कुर्वन्तोऽखिलदेशा हि स्थितिमिमामभिनन्दन्तु" इति। एव विज्ञानविकास लोकश्रेयसे व्यापयन्नपि स विज्ञानदूषणेभ्योऽप्यात्मान त्रातु सर्वानजस्रमुपादिशत्। "धर्मशून्या दृष्टिमुपलालयत. समाजस्य विशृंखलता निश्चप्रचा। न हि सदाचारमात्मनिष्ठा परमात्मपरायणताञ्चोद्वास्य श्रेय साधना सुकरामुत्पश्यामि। धर्मनिष्ठाया महत्त्वमुपेक्षन् समाज आसुरीमेव भूतिमुपासीत"। इत्यादि।

शिक्षाव्यापृतानामुन्नति गौरवञ्चाभिवर्धयितुकाम सोऽभणत् यत् "शासनकर्मणि व्यापृतेभ्य शिक्षकाना कार्य न मात्रयाऽपि हीयते। अत शिक्षकाणा वेतनादिव्यवस्था न शासकेभ्यो न्यूना भवितुमर्हति" इति।

## तत्त्ववेत्ता राष्ट्रपतिः

ग्रीकदेशीय पाश्चात्यतत्त्वविदामाद्य 'प्लेटो' चतुर्विंशतिशताब्देभ्य पूर्वमवोचत् –"तत्त्ववेत्ता हि राष्ट्राग्रणीर्भवितुमर्हति" इति। तदानीतनस्य

राष्ट्रपते पुण्यश्लोकस्य राजेन्द्रप्रसादस्य विदेशयात्रासमयेऽनारोग्यकाले चेति द्विवार तात्कालिकराष्ट्रपतिपदमुवाह राधाकृष्ण । निवृत्ते च राजेन्द्रप्रसादे, राधाकृष्ण १९६२ खिस्ताब्दस्य मेमासस्य १३ दिनाङ्के सर्वसमत्या राष्ट्रपतिपदमधिरुरोह। स हि भारतीययूना भोगपरायणता, कर्तव्यविमुखता च दर्शदर्शं भूयो भूय सखेद परिदिव्यति स्म –"स्वातत्र्यसग्रामे युवसु दृश्यमाना राष्ट्रसेवा हन्त क्व गता! मा आत्मनिष्ठा, त्यागपरायणता, उद्यमशीलता, मातृभूमिश्रेयस आत्मार्पणबुद्धि, सर्वमिद स्वतन्त्रस्य भारतस्य नवनिर्माणेऽभ्युदयाय च नून सुतरामावश्यक वर्तते। किन्तु हन्त! अल्पायासेन बहुफलकामिनो नो युवान चारित्रशुद्धि साहसञ्चोपक्ष्यादर्शशून्य श्रद्धाहीनञ्च जीवन यापयन्ति। युवानो हि राष्ट्रस्य सपद्। तेष्वेव ह्यायतते राष्ट्रस्य भविष्यम्"। इति। राष्ट्रपतिपद प्राप्तवति तत्त्वज्ञशिरोमणौ राधाकृष्णे, दशे विदेशेषु च नैके प्रज्ञावन्तो मुमुदिरे। अय किल तत्त्वजुषा वरेण्यो गभीरेण चिन्तनेन, मनुष्यस्वभावस्य सुदीर्घपरिचयेन, सार्वजनीनव्यवहारवैचक्षण्येन च समन्वित सन् भारतस्य शासन प्रजाश्च सत्पथे प्रवर्तयिष्यतीति चाभिप्रयन्ते स्म निखिला धीमन्त ।

अवाप्तभारताध्यक्ष्यो राधाकृष्ण पूर्वं गान्धारदेश (अफगानिस्तान) तत इरानदेशञ्च सद्भावप्रकाशाय जगाम। तदनन्तरमाङ्ग्लदेश गतो पूर्वं वैदेशिकद्वयेनैव लब्ध विरल सम्मानपत्रमलभत। तत्पूर्वममेरिकादेश गतो राष्ट्रसघस्य महासभामुद्बोधयन्नभाषत –

> "विश्वशान्तिश्चेदपेक्ष्यते राष्ट्रसंघस्यास्य प्रत्येक कर्म विश्वैक्यसमर्थकमेव भवितुमर्हति। राष्ट्राभिमानातिरेको हि विश्वबन्धुत्ववृक्ष मूलादेव कृन्तति परस्परप्रद्वेषं च प्रसूते" इति।

राष्ट्रपतिपदं भजता राधाकृष्णेन तदर्थं नियतस्य वेतनस्य चतुर्थांश एव (सार्धसहस्रद्वयं रूप्यकाणाम्) स्वीकृत्य त्यागादर्शः पुरस्कृतः।

स्वाधिष्ठितं राष्ट्रपतिभवनञ्च जनसाधारणानामपि सुलभप्रवेशं सपाद्य बन्धुत्वभावना कार्यपथं प्रापिता।

भारतस्योत्तरपूर्वस्या दिशि नागभूमौ ख्रिस्तधर्मिणा बहुलता वर्तते। ते हि भारताद्विच्छिन्न स्वतन्त्रशासनमैच्छन्। चीनदेशस्य समानसीमत्वाच्च त तत शस्त्रास्त्राणि प्राप्य धूमकेतव इवोपद्रविणोऽभवन्। तेषा प्रतिकाराय भारतीया सेना तत्र दिवानिश सन्नद्धाऽवर्तत। तत्रत्याया जनताया सेनायाश्च स्नेहमावर्जितु तेषु भारतभक्तिञ्च समेधितुमज्ञातसञ्चार एव राधाकृष्णस्तत्र जगाम। आत्मभावप्रकटनेन तस्य प्राप्तकाले मधुरवचोभिश्च तत्रस्थाना समेषा मन प्रफुल्ल हृष्टञ्चाभवत्।

विश्वस्मिन् विश्वे नेपालदेश एव एक हिन्दुशासित राज्य वर्तते। हिमवदुपत्यकासु प्रतिष्ठितस्यास्य प्रकृतिरामणीयकेन चेतोहरस्य लघुराष्ट्रस्यास्य, धर्मसंस्कारसबधेन भारते ज्येष्ठभ्रातृभावो वर्तत। किन्तु कूटराजनीतिवशात् तत्सौहार्दसरस्तदा कलुषितमभवत्। राष्ट्रपती राधाकृष्णस्त देश गत्वा मधुरया गिरा, स्नेहभृता व्यवहारेण च तदीयनृपस्य प्रजानाञ्च चेत प्रसादयामास। नवीनञ्च सद्भाव घटयामास।

भारतस्य सर्वातिशायि शासकपद प्राप्तस्यान कार्यान्तरव्यग्रस्यापि विद्वद्वत्तमस्यास्य सारस्वतसुतत्व न ग्लानिमवाप। तत्र तत्र धर्मतत्त्वस्य दार्शनिकमत्त्वस्य च प्रकाशनप्रवृत्तौ स सुतराममादत। वेदान्तप्रकाशित सर्वात्मैक्य स अविश्रान्तमुपदिदेश। देहलीनगरे समवेते प्राच्यविद्याविदुषा समाजे स "विश्वेषा जनानामैक्यमिहैवानुभवितु कामये। न हि भेदबुद्धिपराहतस्य परस्पर धुर्धुरायमाणस्य राष्ट्रसघस्य श्रेय सदशयामि। कुटुम्बभाव धरदेकनीडताञ्चानुभवदेव जगत् शान्तिसुख प्राप्स्यति"— इति दृढप्रत्यय सावेगमसकृत् प्रतिपादयामास।

प्रातिवेशिक राष्ट्रस्य पाकिस्तानस्याविवेकप्रसूत प्रद्वेषपूर्ण व्यवहार पर्यालोचयनस्तस्य महद् दु खमजायत। १९६५ ख्रिस्ताब्दे तद्राष्ट्राध्यक्षेण भारत आक्रमित भारतराष्ट्रपतिरेवमगदत् — 'पाकिस्तानाध्यक्ष भारतेन सह युद्ध घोषितवान्। किन्तु न वयमात्मान तद्राष्ट्रेण सह युद्धनग्नमावलयाम। नून वय मैत्रीं शान्ति च कामयामहे। एतद् युद्ध शान्तिप्रियेश्वरमाशु हठादाक्षिप्त

वर्तते। विधिना प्रतिष्ठापितं काश्मीरशासनं बलादन्यथयितुं प्रयतन्ते पाकिस्तानाः। न ह्येष विवेकिनां पन्थाः।" इत्यादि।

१९६४ ख्रिस्ताब्दे राधाकृष्णो रूसदेशं इङ्गलैण्डदेशं च मैत्रीसंवर्धनाय गतः। तस्मिन्नेव वर्षे च पूर्वयूरोपस्य चतुरो देशानयासीत्।

१९६७ ख्रिस्ताब्दस्य मे मासे राष्ट्रपतिनियोगान्निवृत्तोऽसौ महापुरुषो मद्रासनगरे स्वीये सदने वसन् सर्वात्मना सरस्वतीमुपासीनः प्रकृतिमधुराणां पौत्रदौहित्राणां नर्मोपसुखञ्चानुभवन् कालं सुखेनानयत्।

निवृत्तिकाले प्रतिदिनं देशविदेशसुहृदां प्रायः सप्तति पत्राण्यधिगच्छन् तेषामुत्तरादिलेखनव्यापृतः निभृतमेव कालमत्यवाहयत्।

निवृत्ते परं स न कदापि राजकीयासु प्रवृत्तिष्वात्मानमयोजयत्। न चान्यैः पृष्टोऽपि तत्र स्वाभिप्रायमद्योतयत्। न ह्येतादृशेष्वेतत् सुलभम्।

विश्वव्यापिभिर्नैकैः विश्वविद्यालयैः सम्मानोपाधिभिरलङ्कृतोऽसौ महापण्डितः मोस्कोविश्वविद्यालयस्य सम्मानितप्राध्यापकपदमुवाह। नैकेषु विद्यास्थानेषु च स्वमतिविभवं व्याख्यानादिमुखेन व्यतनोत्। लेखकसंघस्य (P E N.) आध्यक्ष्यं कुर्वाणश्च आगन्तुकानां लेखकानां संसर्गमवाप्य तानुच्चादर्शयुक्तासु रचनासु प्रवर्तने परायण आसीत्।

## टेम्पलटोन सम्मानना।

राधाकृष्णोऽद्वितीयस्तत्त्वद्रष्टेति प्रथितमासीद्विश्वस्मिन् विश्वे। प्रकाशितञ्च तज्जागतैः प्रज्ञावद्भिर्बहुशः कृतैः तत्सम्मानैः, तद्धीरकजयन्त्यां प्रकाशितेन महता स्मृतिग्रन्थेन च। अमेरिकादेशीय 'टेम्पलटोन' नामा कश्चिद् धनाढ्यः प्रतिवर्षं धर्मतत्त्वप्रतिपादकेष्वन्यतमस्याद्वितीयस्य विदुषः सम्मानाय प्रभूतं धनं वर्षद्वयात्पूर्वमेवाकल्पयत्। नैकाभिः प्रतिभापूर्णाभिर्विद्याभिः धर्मतत्त्वप्रकाशकस्य विश्वविख्यातयशस एव महाविदुषस्तत्प्राप्तिः सम्भाव्यते। अष्टलक्षरूप्यकप्रायञ्च तत्पुरस्कारधनं सम्मानिताय महानुभावाय वितीर्यते।

१९७५ ख्रिस्ताब्दीयस्तत्पुरस्कार श्री राधाकृष्णाय समम्मान समर्पित आसीत्। आसन्नमहाप्रस्थानस्यास्य भारतरत्नस्य सम्मानेनैव समेषा भारतीयाना महाप्रीतिर्जाताभवत्।

## महाप्रयाणम्।

यमनियमसरक्षितस्वास्थ्यस्य राधाकृष्णस्य शरीर सुदीर्घमविरतोद्यमाद्वा, वयोभाराद्वा, सचरणकर्मानुष्ठानाशक्तत्वाद्वा, व्याधिमभूत्समासीदन्तिमवर्षद्वयम्। तदा तदा किञ्चिदिव स्वास्थ्य लाभमानोऽपि न श्रमसाध्या प्रवृत्तिमङ्गीकर्तुमसहताय कर्मयोगी। अन्तिमेषु दिनेषु विवर्धमानो रोगस्त रुग्णालयशरणमकरोत्। सचिन्ता विषण्णाश्च पुत्रपुत्र्य सुहृदश्च दिवानिश सपर्यापरास्तमावृणवन्। किन्तु हन्त! १९७५ ख्रिस्ताब्द्स्याप्रैलमासषोडशदिने, स्वसमवायात् विच्युतस्य प्रियसुहृदस्तस्य विरह चिरमसहमाना इव दिवौकसस्त प्रेमपाशैराकर्षयन्त स्व निवेश सबहुमानमनैषु। बृहस्पतिकल्पस्यास्य भारतमातु पुत्रश्रेष्ठस्य चिरप्रस्थिर्ति ज्ञात्वा प्रकम्पमिवान्वभवत् समग्र राष्ट्रम्। देशान्तरेष्वपि प्रज्ञावतामुदस्थात् परिदेवन हा! हन्त! गतो नो विश्वबन्धुर्दार्शनिकशिरोमणिरिति।

देवरहित मदिरमिव निष्प्राण तत्कलेवर पुष्पमय्या शिविकायामुपस्थाप्य, सेनाभटै राष्ट्रश्रेष्ठैश्च ससम्मानमुह्यमान चन्दनमयी चितामारोपित, भुशुण्डिघोषै पूरितदिगन्तमग्निजिह्वाभिरालीढ यथायात पञ्चभूतानि निववृते।

## राधाकृष्णस्य विचारविभव।

अर्थदृष्ट्या साधरणस्थितिमति परिवारे प्रसूतो राधाकृष्ण पुरुषार्थसहाय एवोच्चै शिक्षामलभत। अर्थलाभायान्यान् तदा तदा पाठने प्रवृत्त स्वाध्ययनव्ययपर्याप्त धनमार्जत्। ख्रिस्तसचालिताया शालायामधीयान ख्रिस्तै हिन्दुधर्मे क्रियमाणान्निर्मूलानसूयामूलान् वाऽऽक्षेपान् श्रावश्राव भृशमतपत्। तान् प्रतिकर्तुञ्च कृतसकल्पो बभूव। धर्मप्राणपितु पुत्र स स्वामिवरस्य

विवेकानदस्य हिन्दुधर्मगौरवापादकैर्व्याख्यानैर्विवृद्धस्वधर्माभिमान स्वधर्मस्य शुद्धमोजस्वि च रुप वेत्तु प्रकाशयितु च निरणयत्। हिदुधर्मग्रथान् तस्यैतिहासिक स्वरूपञ्च निपुण निरीक्ष्यात्मसात्कृत्य च स दृढममन्यत यद् "धर्मे उपास्थादिविषये च हिदुधर्मोऽनुपममौदार्य भजति.–" इति।

स्नातककक्षा यावन्मुख्यविपयत्वेन स तत्त्वज्ञानमध्यैष्ट। तत्र पाश्चात्यतत्त्वज्ञानमेवातिशयेनाध्याप्यते स्म। अनुस्नातकवर्गे तन भारतीयदर्शनमुपविषयत्वेनाधीत किन्तु न स तत्पर्याप्तज्ञानायामन्यत। अत परीक्षासवधमन्तरैव तेन वेदान्तादिदर्शनाना मूलग्रन्था गभीरमवगाहिता येन ख्रिस्ताक्षेपान् यथावदुत्तरितु पार्येत। स हि प्राचीननमग्रथावगाहनेन नि सशय बुबोध यद् "वार्तमानिको हिदुधर्म, सत्यपि विचारविभववति महाग्रथराशौ, न परधर्मप्रतीकाराय पर्याप्त वीर्यमाधत्ते। धर्मनाम्ना नैका क्षुल्लका न्धयाऽनुस्रियन्ते, सारिष्ठा ओजस्विनश्चाशा नाद्रियन्त। हिंदुधर्मेण पुरस्कृता विशाला जीवनदृष्टि सकुचितैं सामाजिकविधिनिषेधैराकुलीकृताऽऽस्त। समाजशरीरञ्च तेन रुग्णप्राय प्रशिथिलावयव परस्परावहेलनाकर्दमकलुपित, विनश्यत्स्वत्त्वञ्चोच्छ्वसिति"। इति। एवमाकलय्य स ख्रिस्तानामाक्षेपनिर्वृत्तिपूर्वक हिन्दुधर्मस्य तत्त्वदृष्टेश्च वास्तविकमनुपमञ्चौदाय प्रकाशयितु बद्धकटिरभूत्। भारतीयविश्वविद्यालयेपु 'दर्शन' नाम्ना पाश्चात्यदर्शनानामेव प्रधानतयाऽध्यापन भवति, सारिष्ठोऽतिविपुलो बहुमुखश्च भारतीयो दर्शनराशिरुपेक्ष्यत इत्यसगताऽध्यापनव्यवस्थापि त भृश दु खाकरोति स्म।

अनुस्नातकपरीक्षार्थं (एम् ए) तन दर्शनविपयमाश्रित्य महानिबधो व्यरचि य दृष्ट्वा तस्याङ्गलदेशीयोऽध्यापक श्री ए जी होग एवमभणत् – 'विचक्षणो राधाकृष्ण तत्त्वज्ञानस्य मूलभूता समस्या यथावदाकलय्य, सम्यगवबुध्य च ता अतिनिपुण विशद च विमर्शितवान्, गभीरस्याप्यस्य विपयस्य तदीया प्रतिपत्ति नून विदुपोऽपि विस्मय जनयति। आङ्गलभापापाटवञ्चास्य विलक्षणमेधावित्व प्रत्याययते" इति।

राधाकृष्णो बहुशोऽभाषत :—"धर्मो हि मुक्तरूपेषु विचारेषु, श्रेयः-सपादकेषु कर्मसु, न्यायपूर्णायां समाजव्यवस्थायाञ्च माधीयसीमभिव्यक्तिं सपादयेत्" । इति ।

'हिंदुजीवनदृष्टि' इति विषयमाश्रित्य इग्लैण्डदेशे कृतेषु व्याख्यानेषु स दृढ प्रत्यपादयत् "अद्यत्वे प्रकाशमानो हिंदुधर्म ऐतिहासिकीं स्वरूपघटनां कुर्वन्नेवास्ते । न तदनुयायिनो विकासस्य विरामचिह्न प्राप्तमित्यभिप्रयन्ति । भारतीया तत्त्वदृष्टि हि जीवनोत्कर्ष सततोद्यमसाध्य इति सम्मन्यते ।"

"ये हिन्दवो रुढिपरायणा सन्तो विकासशीला जीवनदृष्टिमुपरुध्यन्ति नून ते सत्यस्वरूप न यथावद् जानन्ति । सत्यानुभवैकतत्परा वय पूर्वग्रहशून्या उद्घाटितदृष्टयश्च भवेम ।"

"ईश्वरो न रूढिरूपोऽपि तु सत्यस्वरूप । बहुत्र दृष्टचर यत् कालान्तर उपयुक्ता रूढय कालान्तरे विकासविघातका निरर्थकाश्च सपद्यन्ते । विवेक-चक्षुपाऽर्थशून्यानभ्युपगमात् सुपरीक्ष्य, तेषा परित्यागप्रवणो हि समाज स्वास्थ्यमातनोति" । इति ।

"हिन्दुधर्म सदोत्कर्षप्रवणो भवति । सदाचारेष्विव बुद्धिव्य.पारेष्व-प्यस्माभि सदा जागरूकै पर्यवेक्षणपरैश्च भाव्यम् । प्राचीनव्यवस्थानामनु-सरण सदा विवेकविशुद्धमेव भवितुमर्हति" ।

"भौतिकविज्ञान नून जीवनोपकारक वर्तते । किन्तु तदुपयोक्तुर्मनसो विशुद्धि विना न तदुत्कर्ष श्रेयसे स्यात् । सदाचारदृष्ट्या प्राचीनजनादर्वा-चीनो जनोऽपकर्षमेव प्रकाशयते । विज्ञानेन भौतिक्या समृद्धौ प्रचय गतायामपि कोटिशो जना दीनदीना दु खेन जीवन निर्वहन्ति । अत्र मानवस्य भ्रातृभाव-शून्यता स्वार्थपरायणताञ्च निमित्तमुत्पश्याम ।"

"आर्थिकी समानताऽवश्यमभ्युपेया । किन्तु न तदेव केवल पर्याप्तम् । आर्थिकी पर्याप्तितैव न मनुष्य "मनुष्य" विदधाति । मनुष्यस्य यथार्थं मनुष्यत्वं तस्य दैवीसम्पदो विकासमपेक्षते । आत्मप्रकाशस्योपलब्धिमन्तरा न दैवी-

संपदुपचिनोति। प्रेम्ण सौहार्दस्य च विस्तर एव मानवचेतसो वास्तवमभ्युदय प्रमादञ्च तनुते। जगति न्यायस्य सदाचारस्य च विकास आध्यात्मिकसत्त्वस्य पुष्टि विना किलाकाशकुसुमायते। न च लोकेऽध्यात्मपरिशुद्धि विना शान्ति. समुदेति।"

## वास्तविकोऽध्यात्मविकासः

"शरीरदाढ्यं बुद्धिप्रकर्षश्चाध्यात्मप्रकर्षादृते भयावहे भवत। अध्यात्मप्रकर्ष एव सस्कृतिसमुदयस्य मानदड। प्राकृतिक विज्ञान भौतिकी वृद्धिश्च न स्वत पर्याप्ते। सदाचार-सन्निष्ठे सुतरामावश्यके। मनुष्येण सनिश्चय युक्तकारिणा भाव्यम्। स्वय प्रचीयमाना प्रकृतिरेव न श्रेय साधयिष्यतीति न भ्रमितव्यम्। जडा हि प्रकृतिश्चेतनस्य मनुष्यस्य शुभोदर्कं प्रवर्तनमपेक्षते। यमनियमसयतो मानव एव विज्ञानप्राप्त बल साधु प्रयुञ्जीत। तया कुर्वश्च सस्कृतिशिखरमधिष्ठातु प्रभवति नान्यथा"।

"हिन्दुतत्त्ववृद्धि खलु बुद्धिव्यापारमात्रेणाग्राह्य सत्य साक्षात्कर्तुमनारत प्रवर्तते। तदर्थं च साऽऽध्यात्मिकी शुद्धिर्मानवार्यामामनुते। तत्त्व तर्कमात्रग्राह्यमिति न साऽभिप्रैति। परिशुद्धा बुद्धिरेव सत्यस्य पन्थान दर्शयितुमलम्। अयमेवाभ्युपगम. प्लेटो-सेंटपोलप्रभृतिभि पाश्चात्यचिन्तकैरप्याद्रियते।"

"ईश्वरो नाम न निष्चेष्ट व्यापक वस्तु"। स हि अन्तर्यामी सन् जगत सर्गस्थितिसहाराणा प्रवर्तक। न हि स कदाचिज्जगत् सृष्ट्वा विश्रान्ति निद्रासुख वानुभवति। स हि प्रतिक्षण सर्जनशील एवास्ते। लौकिक्य इतिहासघटना नून परमात्मनोऽभिव्यक्तेरवस्थाविशेषान् आवेदयन्ति। प्रकृतिद्वाराऽऽत्मान प्रकटयन्नेव परमात्मा विभिन्नाकारो विराजते"।

"ईश्वरो नाम नास्माक मन कल्पनामात्रम्। स हि सचराचरस्याधारभूमि"। इति।

## धर्मस्वरूपम्

"धर्मो हि न्याय्यव्यवहारे, सर्वसत्वकरणाया, सर्वसुखप्रवृत्तौ च प्रतिष्ठित । साधवो हि मानवाना परस्परप्रीतिसवर्धनशीला प्राणिन । न निष्क्रिया वाचपुत्तलिका । सर्वसुखभावनैव ताननारत प्रवर्तयते । न केवलमात्मबुद्धया, देहबुद्धयाऽपि साधव सर्वेषु समानभाव भजन्ति । सर्वप्राणिष्वात्मदृष्ट्या प्रवृत्तिमन्त सत्पुरुषमेव साधुमामनन्ति" ।

"भारतीया सन्तो न केवल प्रवचनपाटवेन, प्रज्ञाविभवेन वा, अपितु हृदयस्यौदार्येणाध्यात्मिकप्रकर्षेण च यशस्विनोऽभवन् । धर्मविग्रहाणा तेषामात्मदीप्तिरेव न शिरासि नमयति, चेतो हरति, भावोन्नति च दिशति"। इति ।

## तत्त्वविद्याया प्रयोजनम्

"भौतिकलाभविषये नि स्पृहा तत्त्वविद्यैवाध्यात्मस्वातत्र्यस्य परम साधनम् । सा हि मनुजमुच्चैरन्त स्थिति गमयन्ती, परित प्रवर्तमानाया परिस्थिते पार च नयन्ती, जडस्य भौतिकजगतो बन्धनान्मोचयति । तत्त्वानुभवो हि, जडजगतो भोगैरप्राप्यस्यालौकिकानन्दस्यानुभवमुखेनात्मनो मगदास्य निवर्तयतेऽभौतिक आत्मप्रकाशे च प्रीति जनयति" ।

"लोके न वै किमपि निष्कारण निष्पद्यते । अन्तर्निगूढ वर्तमाना सस्कारा प्राक्तनकर्मजन्या वासनाश्च नो भौतिक सबध घटयन्ति । तुच्छत्वेन मता अपि जागतिक्यो घटना अस्मज्जीवनेऽल्प्य सस्कारमासञ्जयन्ति । कदाचिद् अनालोचितपूर्व आध्यात्मिक सबध कञ्चित्प्रति नो निर्हेतुकी रति विरति वा जनयन्नालक्ष्यते । केषुचिद् दृष्टमात्रेषु नश्चित्त भक्तिसभृत द्रवति । नात्र हेतु पश्याम " ।

"एतादृशीना रतीनामरतीना वा हेतुरस्मद्हृदयनिरूढा वासना एव भवितुमर्हन्ति । न ह्यत्र बुद्धि प्रसरति । इति ।

आङ्ग्लदेशीयो विश्वविख्यातस्तत्त्वचिन्तक 'बर्नार्ड रसेल' राधाकृष्णस्य परम सखा बभूव। स हि न परलोके नापि परमात्मनि विश्वसिति स्म। एकदा स राधाकृष्ण मस्मिन्नपृच्छत् –"ईश्वराङ्गीकारो नाम मनुष्यस्य पुरुषार्थविमुखताया बीजम्। धर्मोऽपि मानवस्य परस्परद्वेषहेतुरिति मानवेतिहास प्रमाणयति। तत्त्वविचारस्य, एतादृश्या आस्तिकतायाश्च वस्तुता अहिनकुलभावो जागर्ति। सत्यप्येव किमिति भवान् तत्त्वविचारसदर्भे धर्ममीश्वर वास्मकृदुदाहरति ?" इति। प्रसन्नवदनो राधाकृष्णोऽपि स्मयन्नेव प्रत्यभाषत –

"धर्म, ईश्वरो वा मानवस्य परमश्रेयस साधने स्त। अनलीक धर्मानुष्ठानमीश्वरास्था च नैकेषा जगदुपकारकाणा महापुरुषाणा प्रवृत्तिबीजमिति नूनमितिहास एव प्रमाणयति। कामक्रोधाद्यभिभूतो मानवो यदि धर्ममीश्वर वा पुरस्कृत्य स्वस्य दुर्वासना उपशमयितु दुश्चरति तर्हि ततस्यापराध। न खलु धर्मो नापीश्वरस्तत्रापराध्यति। भुजङ्गपीत पयोऽपि विषभावमाप्नोति न तावता पयो विषहेतुरिति व्याहरेद् विचारवान्। सम्यगनुष्ठितो धर्मोऽच्छद्मनोपासितश्च परमेश्वरो व्यक्ते साधुभावस्य, जगतश्च श्रेयसोऽनुपम साधनमित्यवैतु प्रज्ञाधनो भवान्"– इति।

एव मथितविश्ववाङ्मयस्य राधाकृष्णस्य कूटकृपा क्षीपणाऽप्रतिहतप्रसरा धर्मस्य तत्त्वस्य च निगूढ रहस्यमहर्निश प्रकाशयन्ती विद्योतन स्म विश्वस्मिन्नपि विश्वे।





# पंडितः जवाहरलालः

आढचकूले समुत्पन्नो नानाविभवलालित ।
दास्यदारिद्रचनाशाय लोकाना सततोद्यत ।।
कारावासादिदु खानि भजन् धैर्येण वीर्यवान् ।
जवाहरो महामात्यो देशरत्नं विराजते ।।

अत्यौष्ण्यमतिशैत्य वा शरीरस्वास्थ्य दूपयति। तथैव अतिदारिद्रय प्रकृष्टविभवश्च पापरुचि विलासिताञ्च परिपोष्य जनमन आविलयत । उत्सर्गनियमस्यास्यापवादो विरलविरलो दृश्यत । दृष्टश्च स समाजस्य महते सौभाग्याय कल्पते ।

मोतीलालो महाविचक्षणो वाक्कीलमूर्धन्यश्चासीत्। प्रभूत धनमर्जनोऽस्य
हे दुग्धसरित इव प्रवहन्त्य आसन्। १८८९ तमे खिस्ताब्दे, नवेम्बर मासस्य
१४ तारिकाया मोतीलालस्य रतिरूपा यथार्थनाम्नी पत्नी स्वरूपराणी पुत्ररत्न
सूत। वैचक्षण्येन यशसा विभवेन च प्रथितस्य मोतीलालस्य पुत्रलाभ
समग्रस्य प्रयागनगरस्य महोत्सवायाकल्पत। तूर्यध्वनिभि, तोरणोत्सारणं,
मिष्टान्नराशिवितरणेन चानन्दातिशयमभिव्यञ्जयन्तौ नेहरुदम्पती जनगण-
स्याभिनन्दनवर्षया भृश स्नापितावभूताम्। पुत्ररत्न चान्वर्थेन जवाहरेति
नाम्ना प्रथितमभूत्।

नेहरुकुटुम्ब पूर्वं काश्मीरेष्ववात्सीत्। वर्षशतकद्वयात् पूर्वं विशीर्णप्राये
मुगलसाम्राज्ये फरुखसियार-नामा औरंगजेबनप्ता जवाहरपूर्वज संस्कृतफारसी-
विद्वांस राजकौलसंज्ञ देहलीनगर सबहुमानमनैषीत्। यमुनानालिकोपकण्ठे
च तस्मै विस्तृता भूमि प्रासादञ्चोपायनीचकार। नालिकोपकण्ठमुपवसन
कौलकुटुम्बस्य 'नेहरु' इत्याख्या समजायत। नालिका लोकभाषाया 'नेहर'
शब्देनोच्यते।

जवाहरस्य प्रपितामहो लक्ष्मीनारायणो देहलीं परित्यज्य कञ्चित्काल
आग्रानगरमुवास। ततश्च गङ्गायमुनयो सगमशोभित तीर्थराज प्रयाग
गत्वा तमेवात्मनो वासभूमिमकरोत्। तत्सुत सेनानायक सम्राड्गङ्गशासन
सिषेवे। अल्प एव वयसि दिवगते तस्मिन् तज्ज्येष्ठसुते नन्दलाले कुटुम्बभार
सपतित। अल्प एव वयसि नन्दलाले च दिवगते कनिष्ठभ्राता मोतीलालो
ज्येष्ठभ्रातु परिवारस्य पोषण सहर्ष स्वीचकार। जवाहरपिता स मोतीलालो
वाक्कीलविद्यावैचक्षण्येन विपुलधनराशिमर्जन् महाराज इव विभववतामग्रेसरो
बभूव। पार्वतीव पतिप्राणा सौशील्यमूर्तिर्माता स्वरूपराणी धर्मध्वजा, औदार्य-
विग्रहेवासीत्। धर्मनिरपेक्षस्य प्रतापवत पितु प्रभावातिशयाज्, जवाहरो
धर्मभावनाशून्य 'धर्मस्तु स्त्रीणामेवोपास्य' इति वितर्कशील आसीत्। तस्य
जन्मदिनमतिविभवेन समभाव्यत। तदा धान्येन त तोलयित्वा दीनेभ्यस्तद्-
धान्य व्यतीर्यत। त्रयोदशहायनस्य जवाहरस्योपनयनविधिर्यथाशास्त्रमन्व-

प्ठीयत। धमनीयाघ्रतेर्मुण्डितशिरसश्च तस्य रूप तदा सुमस्त्रनस्वर्णवत्रशस्येव दर्शनीयमासीच्चक्षुष्मताम्। कौशेयवस्त्रावृतदेह स्वधन्यस्तदण्ड, करधृत भिक्षापात्रश्च स वामनरूपिणो विष्णो सुषमामावहत्।

## विद्यार्जनम्

धनाढ्यो मोतीलाल सुतस्य बालान्तरै सह सामान्यशालायामध्ययन नारोचयत। स हि गृह एवाङ्ग्लदेशीयै शिक्षकैस्तस्य शिक्षामायोजयत्। किन्तु शिशोर्जवाहरस्य भावनाप्रवण चेतो वत्सलया मात्रैव सरसतामापद्यत। सा हि त क्रोडे निवेश्य रामायण-महाभारतकथा, प्राचीनाना शूराणा सतीनाञ्च चरित्राण्यश्रावयत्। येन धर्मशिक्षा यथावदप्राप्यापि जवाहर प्राचीन-सस्कारानात्मसादकरोत्। तथापि धर्मप्राणाया सीतासावित्रीकल्पाया स्व-रूपराण्या तरुणे जवाहरे नाधिक प्रभाव। यतो हि, विवर्धमाने वयसि, स पितृप्रभावाच्छन्नो धर्मानुसरण नून स्त्रीणामेव व्यापार इति कलयति स्म।

पितेव पुत्रो जवाहरोऽपि हयारोहणोत्सुक आसीद्। अश्वप्रियेण पित्रा एकदा नवीनतया क्रीते जात्ये हये, तमारोढुमना जवाहर पित्रानुमतोऽपि किङ्करमनादृत्याश्वमारुह्य सुदूर गतवान्। पर्वतकायो वातरयश्च स उत्प्लवन् जवाहर निक्षिप्य गृह प्रत्यागत। तथाभूत त दृष्ट्वा, जवाहरञ्चैकाकिन तमारुह्य गत श्रुत्वा सपरिवारस्तात सुत मृगयितुमधावत्। अनधिकव्रण स्वयमागच्छन्त च पुत्र परिपश्य, त गाढमाश्लिष्य हर्षाश्रुभि स्नपयामास।

एकादशवर्षीये जवाहरे सोदरा विजयालक्ष्मी ततश्च नैकवर्षपरा कृष्णेति भगिनीद्वय विलम्बेनाजायत। ते दृष्ट्वा एकाकिनोऽस्य भगिनीरूप क्रीडनकमवाप्य महान् प्रमोदोऽजायत।

## विदेशवास

मोतीलाल पाश्चात्यसस्कृतिरञ्जित सन् पुत्रमपि तादृश दिदृक्षु त्रयोदशवर्षस्कमेव तमाङ्ग्लदेश प्रेषयामास। तत्र चातिप्रसिद्धे हैरोनाम्नि-

विद्यालये सोऽध्ययनाय निवेशितः। पाठ्यविषयेषु नातिप्रवीणोऽपि जवाहर इतरविषयाध्ययनपटुः आसीत्। येन राष्ट्रान्तराणामपि राजकीयप्रवृत्तिविज्ञोऽन्यान् सतीर्थ्यान् तत्रातिशेते स्म। १९१० ख्रिस्ताब्दे केम्ब्रिज विद्यापीठस्य बी ए परीक्षामुत्तीर्य स 'बैरिस्टर' पदवीलाभायोपाक्रमत। तेषु दिनेषु प्रकृतिरामणीयकदिदृक्षुमना सो दर्शनीयं नोर्वेदेशं जगाम। निखिलं दिनं पर्वतपर्यटनेनातिवाह्य श्रान्तशरीरो जवाहरः निवासनिकटस्थं हिमशीतं प्रस्रवणं स्नातुं प्रविवेश। शैत्येन जडीभूतदेहो विवशः सः च स प्रवाहप्रवाहिना जलवेगेन सुदूरं नीयमानः कश्चिन्मित्रेण पादे गृहीत्वा संरक्षितः। साहसैकरसिकः स तदा क्षणादेव प्रकृतिं प्रपेदे। भूयोऽपि स नैकान्यसाधारणानि साहसानि चकार। एवं बहुशः स रात्रावेकाक्येव लन्दननगरे सुदूरं पद्भ्यामेव पर्यटति स्म।

## स्वदेशागमनम्

सप्त हायनानि विदेशेष्वतिवाह्य वत्सो मे प्रत्यागच्छतीति ज्ञात्वा मातुः हृदयं हर्षस्यातिरेकमस्पृशत्। "एतत् मे पुत्राय रोचते, स हि स्वप्रकोष्ठमेतादृशं विभूषितं रोचयते। तस्यैतानि भक्ष्याणि बहुमतानि"। इत्येवमादिहर्षोद्गारैः सा स्वयं गृहजनाश्च बहुदिनानि कार्यव्यग्रा अकरोत्। तदागमनदिने तु ब्राह्म एव मुहूर्ते स्नात्वा देवानभ्यर्च्य, गृहमन्तर्बहिर्विविधैरङ्गै रञ्जयित्वा, तोरणान्याबध्य, द्वारदत्तलोचना च विस्मृतान्यवृत्ताऽतिष्ठत्। हयोत्तमाभ्यामाकृष्यमाणे रथे च गृहाङ्गणे स्थितिमापन्ने सर्वे तं प्रत्यधावन्। ततश्च कामकमनीयं कोमलगात्रं चञ्चलगतिं तरुणमवतरन्तं दृष्ट्वा सर्वे तमावृण्वन्। स हि पितरौ प्रणम्य, अनुजां विजयलक्ष्मीं पृष्ठे प्रताड्य, अदृष्टपूर्वां कृष्णामाचुम्ब्य, परिचितांश्च सहासं शिरो नमयित्वा सभाव्य, परिजनान् हस्तमुद्यम्य कुशलवार्तामापृच्छ्य, सुचिरात् विवृतद्वारनयनं सोत्सुकं प्रतीक्षमाणमिव प्रासादं प्राविशत्।

अथ गृहजनैः सुहृद्भिश्च सार्धं विस्रम्भकथाभिः कतिचिद् दिनानि सुखेनातिवाह्य स वाक्कीलकर्मणि प्रवृत्तोऽभवत्। वाक्कीलवरेण्यस्य पितुः पुत्र इति

न तेन तत्र कार्यमन्वेष्टव्यमासीत्। पित्रैव स्वयं स्वम्य लघूनि कार्याणि तस्मै निरदिश्यन्त। बहुश स बुद्धिविभवेन प्रष्टुमतिमपि पितर व्यम्मापयत्। किन्तु तस्मिन् कर्मणि न सुदीर्घं जवाहरमनोऽरज्यत।

## करुणाधनो जवाहरः

मन खेद शमयितु स एकदा मित्रैराकारित मृगयार्थं जगाम। बाल्यादेव प्राणिमात्रप्रेमिणस्तस्य जीवहिंसाया न चेत प्रासरत्। अथापि विनोदमात्रमेतदिति मत्वा वने मित्रै सह सभुशुण्डिर्वभ्राम। तत्र च प्रमादादेव जातेन गुलिकाप्रहारेण भल्लुक एको विद्धोऽभवत्। तदाक्रोश श्रुत्वा मथितमना स तमुपाधावत्। किन्तु तद्गमनात् पूर्वमेव तपस्वी स भल्लुको हत्यादु खमाख्यातुमिव स्रष्टारमुपजगाम। अन्यदापि एवमेव प्रमादादसौ हरिणवधहेतुर्बभूव। कोमलाङ्गस्य विस्फारिताद्रनेत्रस्य तस्य वधात्पर सविद्धचेता करुणाधन स न कदापि मृगयार्थमगच्छत्। न चास्त्रसग्रहमप्यकरोत्।

एकदा दुर्भिक्षपीडितायै जनतायै साह्यधन याचितु केचन युवानो धनाढ्य मोतीलालमुपासर्पन्। तेषा कोलाहलेन क्रुद्धो मोतीलालस्तान् विद्रावयितु द्वा स्थमादिशत्। तदैव तत्रैव स्थित्वा कलकलायमानान् तानकस्मात्तत्रागतो जवाहरो ददर्श। क इम इति द्वा स्थ पृष्ट्वा तेन च यथार्थं प्रबोधित स तान् सस्नेह स्वप्रकोष्ठ निनाय। तत्र भोजन पानीयञ्च तेभ्य साग्रह प्रदाप्य, एकाधिकशत रूप्यकाणा सहर्ष व्यतनोत्। स प्रसन्नाश्च तान् सबहुमान व्यसर्जयत्। दीनाना दु खवार्ता श्रुत्वा भृश दुद्राव दीनबधो तस्य चेत।

## राजकीयस्थितिः

तदा भारतस्य राजकीयस्थितिर्विसष्ठुलाऽवर्तत। उद्दाम-विनीतेतिसघद्वये विभक्ताऽभूद् राष्ट्रिया महासभा। उद्दामानामग्रणीस्तिलक, विनीतानाञ्च मोतीलालप्रभृतय। जवाहर पितृपथमनुसरन्नपि न विनीतमते समाहितमना आसीत्। महात्मा गांधिर्न तावत्काल यावत् राष्ट्राग्रणीपद प्राप। राज

वीर्येष्वपि कर्मसु धर्मस्येश्वरस्य सदाचाराणाञ्च प्राधान्यं पुरस्कुर्वतो गान्धेः कार्यपद्धतिरपि न तदानीमरोचत जवाहराय। ततः मार्चमासेऽमितविरोधा-मृतसरनगरे सम्मिलिते महति जनसम्मर्दे निर्दयं गुलिकावृष्टिमानीनोदा-ह्ररणघाममन्। तेन च तत्र चतुःशतं जना क्रूरं यमसदनं प्रापिता। शासन-स्यैतां नृशंसतां परिपश्य गान्धिमोतीलालप्रभृतयः तद् भृशमनिन्दन्। किन्तु क्वयङ्कार शासनप्रतिकारः कर्तव्य इत्यत्र गान्धिरेव प्रमाणमिति दृष्ट्वा, गान्धेश्च निर्भीकं शासनप्रतीकारायोजनं निभाल्य, मोतीलाल इव साहसप्रियो जवाहरोऽपि तच्छिष्यतां स्वीचकार। भारतपारतन्त्र्यमेव सर्वानर्थबीजमिति असकृत् प्रतिपादनपरो महात्मा नेहरोश्चेतोऽप्यस्वान्तोऽस्य इव आचचर्ष। स हि गान्धेः प्रथमपरिचय एवानुभूतं तत्प्रभावविशेषमेव निरूपयति –"गान्धि-रतिनम्रोऽपि वज्रदृढः प्रातीयत। तस्य भाषार्जवयुक्तास्निग्धा हृदयादेवोद्-गताऽभवत्। तद्वाणी प्रतिपदं प्रामाणिकतां प्रत्याययतेस्म। नूनं तस्य मृदुनी अगाधे च नेत्रे राष्ट्रभक्ते पूरमिवास्त्रावयताम्। धैर्यमूर्तिः स देशवासिनो दीर्घसंघर्षपर्यायानुपमत्यागाय च सन्नाहयितुं प्राचोदयत्"। स एव निजगाद – "बलोन्मत्ताद् विदेशशासनात् स्वातन्त्र्यमाच्छेत्तुं सर्वसमर्पणायोद्युक्ता भवन्तु भारतीयाः। अहिंसाव्रता अपि न वयं शासकशासनमङ्गीकुर्म इति घोषयन्त कषाघातान् यष्टिप्रहाराश्च सहामः सहेमहि। मा यदि भवन्तो तेनार मन्यन्ते मद्दर्शितः पन्था सर्वथानुसर्तव्यः। यदि मां नेतृत्वमंश्ययुक्तं पश्यन्ति अन्यो-योऽह नेतृपदान् शूलं वाऽरोपणीयः। किन्तु यावदहं सूत्रधारस्तावत् मत्कृत नियमनमवश्यमङ्गीकर्तव्यम्।" एवमादि भणित्वा, सोऽसहकारयुद्धं घोषया-मास"। इति। तदनु सत्यपि नैकशो मतवैरूप्ये, नेहरुः आस्वातन्त्र्यलाभं गान्धिमेव गुरुमकल्पयत्।

१९१६ ख्रिस्ताब्दे जवाहरस्यातीव सुरूपया, मृदुलया अपि तेजस्विन्या कमलाख्यया कन्यया सह विवाहविधिः विभवान्वितेनोत्साहेन निरवर्तत। कमला स्वातन्त्र्यप्रिया, अत पतिपरायणापि पत्या नैकश सघर्षमवाप। अथापि प्रीतिमतोरनयोर्मतिभेदप्रयुक्तः कलहो न चिरायावर्तत।

# यातनापरंपरा

१९२१ ख्रिस्ताब्दे नागपुरनगरे सवृत्ते महासभाधिवेशने गान्धिप्रेरित सत्याग्रहप्रस्ताव पारितोऽभूद्। "ब्रिटिशशासनमत्याचारभूयिष्ठम्। समग्रोऽपि देशस्तेन महाकाराग रता नीत । अतस्तस्याहिंसक प्रतीकार एव न कर्तव्यम्"। इति महासभादेश श्रावयितु ग्रामग्राम भ्रमन्तो देशभक्ता श्रममविगणय्य त घोषयन्ति स्म। जवाहरस्तु यूनामग्रणी सन् वात्येव वेगेन ग्रामेषु सञ्चरन्, शासनविद्रोहमुपादिशत्। अथ च आङ्ग्लयुवराजस्य प्रयागागमनसमये, न तत्सत्कारोऽपि तु कृष्णध्वजैरवमाननैव कर्तव्येत्युपदिशन्तौ मोतीलालजवाहरौ राजद्रोहाभियोगेन षण्मासभोग्य कारागार प्रापितौ। इदप्रथमतया प्राप्तमिम कारावास सहासमङ्गीचकार सेवाधनो जवाहर । गृहीतमुक्तश्च स पुनरपि कृषकाना शासनेन क्रियमाणस्य दमनस्य शोषणस्य च प्रतिकाराय ग्रामेग्रामे भाषणानि कुर्वन् शासनेनाऽभियुक्त आसीत्। अधिकरणस्थल नीतोऽसौ नात्मत्राणाय प्रावर्तत। स हि प्राड्विवाकमेवमभणत् –"अस्माक शस्त्राणि प्रेम-त्यागमयानि विद्यन्ते। वय किल स्वान्त्याय युध्याम । न वय कस्यापि राष्ट्रस्यानिष्ट कामयामहे न च कमपि शासितुमभिलषाम । अन्य इव वयमपि स्वायत्तशासना स्वाभ्युदयप्रवणाश्च भवेमेति नोऽध्यवसाय"। पुनश्च सोऽवादीत् –"भारतमातु स्वातन्त्र्याय प्रवर्तमानोऽहमात्मान भाग्यवन्त मन्ये। महात्मनो गान्धेरनुयायित्व हि मे तद्भाग्य द्विगुणीकरोति। स्वस्य शुभभावनासिद्धयर्थ प्राणपरित्यागोऽपि नून मनुजजीवन सफलयति"–इत्यादि। एतद्धि त्रयस्त्रिंशद्वर्षीयो जवाहरो जगाद।

तस्य गृहे विग्रहवती लक्ष्मीर्विरराज। विभवभूयिष्ठे गृहे विलाससामग्री अनायाससुलभाऽभूद्। सुरूपा प्रीतिमती च भार्या, वत्सला माता, स्निग्धे स्वसारौ, अनुकूल परिजन , एव भोगसुलभे सर्वस्मिन्नप्यस्मिन् वर्तमानेऽपि देशदास्यविषण्णो मातृप्रिय। जवाहरो देशमुक्त्यै पुनरपि वर्षद्वयभोग्य कारावास सस्याभाग।

एकदा सद्य एव कारामुक्तं जवाहरं ग्रीनवुडाख्यः प्रयागमुख्यप्राड्विवाकः सस्नेहमाजुहाव। मधुभाषी स हि नैकाभिर्विधाभिस्तं भूरि प्रशशंस। 'आङ्ग्लशासनं वस्तुतो भारतश्रेयः कामयते। विधानस्य नवनिर्माणेन च देशस्याभ्युदयं चिकीर्षति। एतादृशे देशहितकर्मणि तद्धि भवादृशां प्रज्ञावतां साह्यं काङ्क्षते। अतो शासनविरोधमार्गं परिहाय शासनसहायो भवतु भवान्"— इति च निवेदयामास। पुनश्च स्मितमुखः स नेहरुं लाभयन्निवाभणत् — "यदि भवान् प्रस्तावमिममभ्युपगच्छति राजप्रतिनिधेः (वाईसरायस्य) मन्त्रिपरिषत्सदस्यो भविष्यति। स्वदेशश्रेयश्च घटयितुं शक्ष्यति" इति। श्रुत्वैतत्पुरुषर्षभो जवाहरोऽभाषत—"नैव मन्त्रिपदलाभेन मां वञ्चयितुमर्हति भवान्। शासनं स्वस्य स्थितिं दृढयितुमेव विधाननिर्माणस्य जालं विस्तारयति। न मां तज्जालपतितं द्रक्ष्यति भवान्"। इति। उत्तरमिदं श्रुत्वा स्तब्धीभूतः स प्राड्विवाकः (न्यायाधीशः) यथागतं प्रतिनिवृत्तः। भारतशासनेन जवाहरमनुनीय स्वपक्षपातिनं विधातुमेव स प्रेषित इत्यवागच्छद् जवाहरः पश्चात्।

## नगरपालिकाध्यक्षः

प्रयागनगरपालिकायाः प्रमुखसदस्यत्वेन निर्वाचितो जवाहरः तत्र लोकाभ्युदयाय नागरिकव्यवस्थां चारु सम्पादयितुं भूरि प्रायतत। स हि शासनकृतानवरोधान् अविगणय्यानेकान् दुर्वृत्तानधिकारिणोऽर्धचन्द्रं दत्त्वाऽधिकारभ्रष्टानकरोत्। तस्य लोकप्रियतां कार्यदक्षतां च विभाव्य सन्तप्तेन शासनेन बहवः प्रत्यवायाः समुपस्थापिताः। तैः क्लिष्टः स विवशीभूय वर्षद्वयानन्तरं तत्पदं तत्याज।

## कारावासक्लेशः

पञ्जाबप्रदेशे नाभानामकं देशिकराज्यमवर्तत। तद्भूपो राष्ट्रभक्त इति तं विस्थाप्याङ्ग्लप्रतिनिधिर्निवेशितः। एतदसहमाना तत्रत्या प्रजा सत्याग्रहपराऽभवत्। प्रजाप्रतीकारं द्रष्टुं निमन्त्रितो जवाहरस्तद्भूमिं स्पृशन्नेव

सैनिकैर्गृहीतो मलीमसेऽनेकजन्तुसेविते च कारागृहे निवेशितः। न्यायालयं नीतश्च सः प्राड्विवाकं स्वस्य दोषपत्रं ययाच। किन्तु विधिशून्ये तत्र न्यायागारे न कोऽपि नियमविधिरन्वष्ठीयत। 'भवतोऽत्र प्रवेश एवापराधः' इत्युक्त्वा स पुनः कारां प्रेषितः। तत्रत्यं नियमान्ध्यं पश्यन् जवाहरो व्याकुलचेता अपि ओषधिरुद्धवीर्यः पन्नग इव दुःखेन पञ्चदश दिनान्यगमयत्। तत्र वासस्थानं मलिनमलिनं भोजनञ्च पशुभिरप्यग्राह्यमिति रोगाग्रान्तः समजनि। तादृशं तं श्रुत्वा तज्जनकः तूर्णं तत्रागतः, तञ्च मोचयित्वा गृहं निनाय। सुकुमारशरीरस्य जवाहरस्य जन्तुभिः क्षुधया मनस्तापेन च क्लिष्टः कायः तदनु चिरेणैव स्वास्थ्यमाप।

## साहित्यरचना

भूयोभूयः कारावासं प्रपन्नो जवाहरः एकदा दीर्घकालीनं कारावासमनुभवितुं देहरादूनकारायां निवेशितः। तत्र स्थितेन तेन मनः सतापमुपशमयितुम्, अदम्यामुच्छ्वलच्छक्तिञ्चोपयुक्ते कर्मणि योजयितुं, प्रियपुत्र्यै इन्दिरायै रोचकशैल्या निपुणं निरूपितो भारतेतिहासः पत्रपरम्परया प्रेषितः। ततश्च समयान्तरे स्वस्यात्मकथा विरचिता या भारतीयनवोत्थानस्य स्वरूपं साधु परिचाययति, विविधानां महापुरुषाणाञ्च स्वभावविशेषं श्लिष्टतया निरूपयति। आङ्गलभाषायामसाधारणं प्रभुत्वं, विषयान्तरङ्गप्रवेशसामर्थ्यं, हृदयङ्गमा निरूपणशैली कल्पनाप्रौढिश्चेत्यादयो रचनागुणा अस्य कृतिषु प्रचुरं वर्तमानाः सहृदयचेतांसि निपुणमावर्जयन्ति।

द्वितीये जागतिके युद्धे विजृम्भमाणे केचन सुभाषप्रभृतयो नेतारः ब्रिटिशशत्रुभिः सधायाङ्ग्लेभ्यः स्वातन्त्र्यमाच्छेत्तुमैच्छन्। किन्तु विपरीतकारिभिर्जर्मन-जापान-इटालिदेशैः सधानमयुक्तं मन्वानो महात्मा गान्धिः नैतदुचितमपश्यत्। आङ्गलैर्यदि तत्सधान्तर्गतं स्वातन्त्र्यमनुमन्येत तदपि नो बहुमतं स्यादिति च तेन विज्ञापितम्। किन्तु सुभाषमुख्यैरन्यैर्महासभाकर्णधारैर्नैतदङ्गीकृतम्। एतेन महासभयाऽनादृतमाङ्ग्लशासनं रुष्टमासीद्। मुस्लिमलिग-

नेतार कुटिलमतिं ज़िन्नामहाशय च प्रोत्साह्य तन्मुखेन भारतस्य हिन्दु-मुस्लिम-भूभागौ कल्पनीयाविति विषय तेन पुरस्कृत । अस्य चाङगीकारो न कदापि महामभासम्मत इति तन्नेतारो सडिण्डिममनेकशोऽप्रथयन्। अनेन विवादेनाङ्ग्ला भारत स्वान्त्र्यवञ्चित चिकीर्षन्तीति परिभाव्य, गाधिमहात्मना पूर्व व्यक्तिश सत्याग्रह आद्रियत। विनोबा भावे चास्याग्रदूतोऽकारि। तृतीयश्च नेहरुमहाशय । स हि प्रयागनगरे युद्धविरोध्र कुर्वाणो गृहीत कारगारे च निक्षिप्त । तत पुनश्च राजकीयचर्चामिषेणाचिरादेव स विसृष्ट ।

## अन्तिमसंघर्षः

**स्टेफर्ड क्रिप्स** नाम्न कस्यचित् भारतमित्रत्वेन मतस्याङ्ग्लस्य प्रामुख्ये समितिरेका प्रेषिता ब्रिटिशशासनेन। तया पुनरत्रत्यैर्नायकै सह सम्मन्त्र्य, भारतसाह्यमधिगन्तव्य महायुद्ध इत्यासीदभ्युपगम । किन्तु भारतविभागाग्रहिणा मुस्लिमनेत्रा तस्योद्योगो विफलता नीत । मुस्लिमसङगस्य विरोध पुरस्कृत्य धूर्तशिरोमणय आङ्ग्ला भारताय स्वातन्त्र्यदान नेच्छन्ति-इति विभाव्य, **'कार्यं साधयेद् देहं वा पातयेद्'** इति दृढमतया महासभया चरम सघर्पमभिलक्ष्य महदधिवेशनमाकारित मुबापुर्याम्। **गोवलियाटॅक** मैदानाभिधे (अद्य अगस्त क्रान्तिमैदानाभिधे) विशाल उद्याने, विस्तृते मण्डपे, भारतस्यात्मभूतानि राष्ट्रसेवैकव्रतानि नररत्नानि सममिलन्। अस्याधिवेशनस्य निर्णयान् सकुतूहल प्रतीक्षन्ते स्म जागतिका जना । महात्मगाधेर्नेतृभावे **पूर्णस्वातन्त्र्यमेव** पणो नो युद्धसाह्यस्येति प्रस्ताव सोत्साह सजयघोष च पारित । १९४२ ख्रिस्ताब्दस्यागस्तमासस्याष्टमे दिने प्रस्तावे पारितमात्रे, तन्मध्यरात्र एव सर्वे सम्मिलिता महासभानायका गृहीता शासनेन, विविधासु कारासु च सन्निरुद्धा । न केवल मुबामुर्यामपि तु समग्रे देशे, ग्रामेषु, नगरेषु च वर्तमाना सर्वे राष्ट्रभक्ता निगृह्य कारागारेषु निवेशिता । वर्षत्रयव्यापिनि अस्मिन् कारागृहवासे जवाहरेण **'भारतगवेषणा'** (Discovery of India) इति भारतस्य सास्कृतिक, राजकीय, प्राकृतिकं च

विशेष गर्भीकुर्वन् महाकायो ग्रथो विरचित । प्रकाशितमात्र एव यस्मिन् लक्षशो ग्रथा सर्वदेशेष्वहमहमिकयाऽक्रियन्त ।

ततश्च महाप्रज्ञ विजयिनमपि रूढिदास चर्चिल तत्पक्ष च पराजित्य श्रमिकपक्ष शासकोभूदाङ्गलदेशे ।

तस्य प्रधानमन्त्री एटली महोदयो भारत।य स्वातन्त्र दातव्यमित्यभिप्रायेण भारतीयराजकीयपक्षै सह सम्मन्त्रणाय राजप्रतिनिधिमादिदेश। तदनुसार हिन्दुस्थान-पाकिस्तानेति विभज्य द्विधा भूखण्डेस्मिन् स्वातन्त्र्य प्रवर्ततामिति शासननिश्चयो जात । तदङ्गीकारे, स्वाभिप्रेता भारताखण्डता नश्येद्, अनङ्गीकारे च दास्यानुवृत्तिरित्युभयतो पाशारज्जु पश्यद्भिर्महासभानेतृभि-र्गान्धिमहात्मनो विरोधमविगणय्यापि भारतविभागोऽङ्गीकृत । तत्र च पुन स्वतत्रभारतस्य मुख्यामात्यपदमापादितो जवाहर । अय किल चिरात् स्वातन्त्र्यस्वप्नद्रष्टा स्वतन्त्रे भारते सामाजिकीमार्थिकी राजकीयाञ्चोन्नति-मुद्भावयितु द्रढसकल्प आसीत् ।

## जातिसंघर्षो हिंसाताण्डवञ्च

चिरादनेकेषामुद्भटाना राष्ट्रभक्ताना बलिदानेन स्वातन्त्र्यलाभो जात इति नूनमुत्साहस्यानन्दस्य च परा काष्ठामस्पृशद् भारतीया जनता। विभक्ते भारते उभयभागयोर्जनता शासने च मिथ सख्येन प्रवर्तिष्यन्ते स्वा स्वामुन्नति च विधातु कृताध्यवसाया स्युरिति मतमासीज्जवाहरादिभिर्नेतृभि । किन्तु हन्त ! सद्य एव स्वराज्ये पाकिस्तानगता मुस्लिमास्तत्रत्याना हिन्दूसिक्खाना-मुन्मूलनायैव प्रावर्तन्त। तत्र हि पितृषु पश्यत्सु शिशव पाषाणेष्वास्फोट्य मारिता, युवतयोऽपहृता, नि शस्त्रा जना शस्त्रगास्कृता, गृहा प्रज्वालिता, एवञ्चानेकेऽवर्णनीया पाषाणानामप्यश्रुविमोचका क्रूरक्रूरा अत्याचारा अनुष्ठिता । पाकिस्तानात् कथञ्चित्पलाय्यागताना हिन्दूसिक्खाना करुण-करुणा कथा श्रुत्वा जातवेपथवो मन्युमन्तोऽन्यत्र हिन्दुसिक्खा वैरेण परिध्मात-

मनमो नष्टविवेकाश्च सन्तोऽत्र वसत्सु मुसलमानेषु क्रूरकर्माण सवृत्ता । भारते वर्षे सर्वधर्मीयाणा समानोऽधिकार इति कृतसकल्पेऽपि शासन एतत्प्रनिकारकार्यमनिकठिनमभवत् । चिरात् सर्वधर्मसमभाव शिक्षिता उदारचेनसोऽपि हिंदव प्रतिदिन पाकिस्तानपशुकर्माणि श्रावश्राव भारतशासनस्य मुस्लिमप्रीतिमनिन्दन् । सत्यपि तादृश्या विषमाया स्थितौ नरशार्दूलसरदारपटेलसहाया जवाहर कथञ्चिद् भारत शान्तिरक्षामातनोत् । जवाहरेऽनिनरसाधारणी लोकप्रीतिरेव तदा जवाहरस्य नेतृत्वरक्षार्थं अलमभूत् । पाकिस्ताने हिंदूसिख्खाना करुण क्रदन भवतीति श्रुत्वा व्यग्रचेता जवाहर आत्मरक्षामविगणय्य तत्र स्वय गत । तत्रत्यप्रधानमन्त्रिण सहकृत्वा सहारभूमि च गत्वा यथाशक्य हिंदुसिख्खान् ररक्ष, तथा भारतागमनव्यवस्थाञ्च समपादयत् ।

अखण्डभारतव्रतिभि जवाहरसरदारप्रभृतिभि कथ भारतविभागाऽनुमत इति बहूना विचिकित्सा भवति । अत्रेदमवधेयम्—स्वातन्त्र्यप्राप्त पूर्ववर्षे महासभा-मुस्लिमसघयो सयुक्त प्रायोगिक मन्त्रिमण्डलमारच्यन । तत्र मुस्लिमप्रतिनिधिभि शासनकर्मणि प्रतिपद प्रत्यवाया उपास्याप्यन्त । येन, प्रजोत्कर्षस्य कार्यं सर्वथाऽवरुद्धमासीत् । इयमेव स्थिति सर्वदाऽनुवर्तेत चेद् गतिरोध स्यात्, प्रजाभ्युदयसकल्पा स्वप्नायमाना स्युरिति च सभाव्य, उपायान्तरमपश्यन्तो विवशा महासभानेतारा भारतविभाजनमङ्गीकृतवन्त इति । अन्यच्च, भारतनेतृभिर्मतमभूद्यद् लब्धे स्वीयेऽभिमत शासने, पाकिस्तानशासका प्रजाश्च स्वाभ्युदयकर्मणि निरता सन्ता जातिप्रद्वेष विस्मरेयु, अभ्युत्थितमपि तमुपशमयेयु । पाकिस्तानस्रष्टा जिन्ना भूयाभूयस्तत्तथाख्यापयत । तस्मिन् श्रद्धावन्तो ऋजुमतयो महात्मन शिष्या नून प्रतारिता बभूवु ।

धर्मभेदमाश्रित्य परस्पर घ्नत्सु पानविषु नितरा चुकोप जवाहर । एकदा देहलीनगर्यां सञ्चरन् स प्रधानमन्त्री रक्तेक्षणमुद्यतखड्ग सिख्ख यवनमेक प्रहर्तुकाममपश्यत् । तथाभूते तस्मिन् दृष्टमात्र एव जवाहरो वाहनादुत्प्लुत्य, तस्य हस्तात् खड्गमाच्छिद्य, त क्रोधकम्पितकण्ठरवेणोपालभत । तथैवान्यदा

मुस्लिमस्यान्यस्य पणि दग्धमुद्यत जनगण निवारयामास। स न कदापि स्वदेहसुरक्षाविचारेण कर्तव्यान् न्यवर्तत।

## विश्वनेता जवाहर.

द्वितीयविश्वयुद्धात्पर विश्वराष्ट्राणि साम्यवादिना तद्विरोधिनाञ्च दलद्वये विभक्तान्यासन्। परस्परप्रद्विषतो तयो कदा नु सघर्षो जगद्विनाशाय परिणमेदिति भीतभीतमिवाभवज्जनमन। अण्वस्त्रसज्जाना समानबलाना राष्ट्राणा सघर्षकण्टक उन्मूलनीय इति शुभाशयेन पडितवरो नेहरुरपक्षपातिना राष्ट्राणा समूह सघटयितुमुचितमपश्यत्। युद्धभीतिञ्च परिपश्यन् स युद्धबीजमुन्मूलयितुमहर्निशमयतत। तदर्थं च सर्वराष्ट्रसघस्य (U N O) तटस्थता शक्तिमत्ताञ्चोपोद्बलयितुमुपायानाद्रियत। काश्मीरप्रदेशे पाकिस्तानेनाक्रमिते, राष्ट्रसघ निर्णयायोपधावतोऽस्येदमेवासीदभिप्रेतम्। किन्तु हन्त! कुटिलमतयो महाराष्ट्राणामग्रण्यस्तस्य न्याय्यमपि पक्षमुपेक्ष्य, कुटिलैरुपायैं काश्मीरगत व्यवहार ग्रथिभूयिष्ठ दु साध्यसमाधानञ्च व्यदधु।

एवमेव चीनदेशस्य मैत्री काक्षन् भद्रभावो जवाहर प्रतारणाभाजन बभूव। स हि नवीनतया चीनदेशे स्थापित साम्यवादिना शासन भूरि प्रशशस। तच्छासकैश्च मैत्री द्रढयितु तत्प्रधानमत्रिण भारते निमन्त्र्य सबहुमान त सत्कृतवान्। 'हिंदीचीनी भाईभाई' इति लक्षशो जनै कृतन घोषेण च तदा भारतभूरापूर्यत। किन्तु तिबेटप्रदेश ग्रसित्वा तद्द्वारा च भारतमाक्रम्य, 'साधौ शाठ्य प्रयोजयेदिति चीनदेशा नूतनमेव व्यवहारसूत्र प्रवर्तयामास।

## उद्योग-यंत्ररचनाध्यवसाय

वर्षसहस्राद् दास्यमनुभवन् भारतवर्षोऽतीव दारिद्र्यमाप्तयानस्ति। सत्यपि प्रभूत खनिजद्रव्यगणे, सत्यामपि विपुलायां प्राकृतिकसपदि, सति च विश्वस्मिन् विश्वप्रतिशयत्वेन द्वितीयता प्राप्त जनसमुदाये, सत्स्वप्येतेषु धनोत्पादनक्षमेषु कारणेषु सपदा यथावद् विनियोगाभावाद्दीनतमा दयनीयाञ्च

दगामनुभवति भारतराष्ट्रम्। भारतपुत्रपुत्र्यो विविधासु विद्यासु, कलासु, विज्ञाने च प्रथितयशसः। यदि तेषां बुद्धिविभवं, जननायाश्च क्रियाशक्तिं, समुचितेन पर्योपयुज्येते, नूनं देशोऽयमाद्यतमदेशानामन्यतमो भवेदिति समीक्ष्य, विज्ञानसुलभानामुपायानामाश्रयणमन्तरा न देशसंपद उल्लासं सुकर इति च विचार्य, प्रधानमन्त्री नेहरूमहात्मा जलबन्धानां, कुल्यानाम्, अयो-निर्माणयन्त्रगृहाणां, यन्त्रनिर्माणोद्योगानाञ्च प्रतिष्ठापनपरोऽभवत्। द्वितीय-विश्वयुद्धसमये युद्धसामग्रीनिर्माणव्यापृतेषु देशान्तरेषु, भारते केषाञ्चिदु-द्योगानां प्रस्थापनाऽभवत्। किन्तु ते व्यक्तिशः स्वार्थलाभैकदृष्टिभिरुद्योग-पतिभिः स्थापिता इति, बहुधनापेक्षाणां प्रारम्भे लाभशून्यानां मौलिकाना-मुद्योगानामभाव एवासीत्। तच्च प्रभूतधनवता प्रभविष्णुना शासनेनैव कर्तुं शक्यमिति पर्यालोच्य, श्रीनेहरुविशिष्टानां तज्ज्ञानामुपदेशमासाद्य, विदेशे-भ्योऽपि च निष्णातान् धनयन्त्रादीनि चोपलभ्य, महत उद्योगानस्थापयत्। धूमशकटयन्त्राणां तदासनगृहाणां (engines & carriages) च निर्माणाय चित्तरञ्जनोद्योगगृहाणि, रासायनिकभूरसकानां (chemical manure) कृते सिन्दरी-यन्त्रशाला, अयसो नानाविकारनिर्माणाय च दुर्गापुर-राउर्केलाप्रभृतीनि उद्योगगृहाणि, विद्युदुपकरणोत्पादनाय भोपालनगरे च महदुद्योगगृहमिति नैकान्युद्योगगृहाणि निर्मापितानि। कृषिवृद्ध्यर्थं भाखरानागलनागार्जुनसागर-प्रभृतयो जलबन्धाः, विद्युदुत्पादनाय च नानाप्रकाराः सेतवः आरचिताः। युद्धसामग्र्यर्थं परमुखावलोकनं प्राणहरमिति परिलक्ष्य, तदर्थं विमानाना-मन्योन्यादनार्थं, नैकान्युद्योगगृहाणि विरचितानि।

अण्वस्त्रविस्फोटो महानर्थकारीत्यनुभूतमस्माभिः। अतस्तन्निर्माणमन-र्थकारीत्यसकृत् सावष्टम्भं प्रतिपादितं भारतेन। किन्तु प्रतिदिनं क्षयं गच्छ-न्त्या भूतैलादिसमृद्ध्या, विदेशेभ्यश्च प्राप्तव्यानां भूतैलादीनां महार्घतया च उद्योगगतयेऽणुशक्तिप्राप्तिरनिवार्येति पर्यवेक्ष्य, तत्सम्पादनाय मुम्बापुर्यां महदायोजनं विहितमणुविज्ञाननिष्णातस्य होमी भाभा इत्यस्याध्यक्ष्ये। एतद्द्वारा पुनः शाखाभूतान्यन्यान्यप्युद्योगगृहाण्यारब्धानि। सोऽयं दीर्घ-

दृष्टेर्जवाहरस्याध्यवसाय सर्वथा देशस्योपकारक सवृत्त इति वारत्रयं पाकिस्तानेन सह युद्धप्रसङ्गे, अणुशक्तिगृहेभ्यो विद्युतो लाभेन च सुष्ठु साधित वर्तते। भारतस्य सर्वभागमभ्युदय सपादयितुमहर्निशमविरत व्यापृतस्य नेहरो स्वस्वास्थ्य–सुखयोविस्मृतिरेवाभवत्। विविधाः पञ्चवार्षिकीयोजना आयोज्य क्रमेण द्रढीयान्नुत्कर्ष वरणीय इति विभावितं नेहरुमहाशयेन। चिरात् पारतन्त्र्यवागुरया पतितायाः जनताया उद्यमपरायणता जागृतिमभ्युदयोन्मुखताञ्चापादयितु भृशमायतित तेन।

## मायापराणां चीनीयानां प्रतारणा

अत्युत्कट देशकल्याणतत्पर, 'वसुधैव कुटुम्बकम्' इति भारतीयसस्कृतिपय आपीय विश्वबन्धुत्वभावनाप्रवणश्च जवाहर समग्रेषु देशेषु शान्ति सुख चाभिवर्धयितु सुतरा प्रवृत्त आसीत्। तत्रापि दरिद्रेषु देशेषु तस्याधिका प्रीति। दीनानामाढ्येभ्य सरक्षणतत्परा साम्यवादपुरस्कर्तार इत्यभ्युपागच्छन्नेहरु। धनिकजना इव धनिकदेशा अपि साधनहीनराष्ट्राणा शोषणपरा इत्यवागच्छत् स। अत अमेरिकादेशो न. नैकप्रसङ्गेषु धनेनोपकुर्वन्नपि, तस्यानुगामित्वे स्वीकृते च प्रभूत धनेनोपकरणैश्चोपकर्तु समर्थोऽपि, स बहुशो निन्दितस्तन्मार्गमनुचित मन्वानेन जवाहरेण। चीनदेशे नवीनतया साम्यवादिशासनप्रतिष्ठाया जाताया तत्र प्रीतिमान् नेहरु तदग्रणीना विस्तारभावना प्रतारणपटुताञ्च न विवेद। तत्र स्वय गत्वा तदीय प्रधानामात्यञ्चात्रामन्त्र्य तदीयामभियुक्तता सर्वेभ्य प्रत्याययत। तिबेटप्रदेशे तेन नि सकोच निर्दय च निगलितेऽपि, नेहरु तूष्णीमतिष्ठत्। 'पञ्चशील' सिद्धान्तनाम्ना च सर्वेषा बन्धुभावेन स्थिति परस्परविषयेष्वनुपरोध च स प्रचारयामास। निकृतिपराश्चीनीया एतदनुमतमस्माकमिति तार घोषयन्तोऽविज्ञातसञ्चारा पूर्व प्रच्छन्न ततश्च प्रत्यक्ष निर्लज्ज भारतभुवमाक्राम्यन्। तेषा तद्दुष्कर्म पश्यन्नेहरुस्तान् तथाकरणान्निवर्तितु प्रार्थयत्। किन्तु धृष्टास्ते ततोऽप्रच्छन्नमेवाक्रमणव्यवहार विस्तारयन्त बहुयोजनविस्तीर्णां भारतभुव स्वायत्तीचक्रु। इदानीमपि च ते न ता भूमि जहति।

चीनीयेषु पूर्वं दर्शितभक्तेर्जवाहरस्यैतेन महान् मर्माघातोऽभवत्। तस्य साम्यवादिपक्षपात पुराऽप्युक्त प्रतिपादयन्तो जना किल तस्य मुग्धत्व मूढत्वमिति च प्राख्यापयन्। एतेनतु मोढुमशक्नुवनय साधुवृत्त ऋजुस्वभावश्च पुरुषर्षभो हृदयरोगपीडितोऽभवत्।

## महाप्रस्थानम्

अनारत विश्रान्तिशून्यस्य, देशोद्धारनिरतस्य, प्रच्छन्नशत्रूणाञ्च कृत घ्नताहतस्य, भारतमातु पुत्रोत्तमस्य महापुरुषस्यास्य जीवनदीप सहसैव १९६४ खिस्ताब्दस्य मे मासस्य २७ तमे दिने निर्वाण प्राप। नभोवाण्या पुरुषरत्नस्य जवाहरस्य परलोकयात्रावार्तायां प्रसारितायां सर्वत्र जगति दु खादधिरुच्छ्वसित आसीत्। भारतीयास्तु शोकस्तब्धवृत्तय सन्त किङ्कर्तव्यतामूढा अभूवन्। विश्वशान्तेरग्रदूतमिम तदीयैर्नानागुणानुवादपुष्पैरभ्यर्चयामासु विश्वनायका। महात्मगान्धिमन्तरा नान्य कोऽपि भारतीयो नरमणिरेतादृश जनताप्रेम लोकसम्मानञ्चाधिगतवान्।

आयत्या न केवल भारतस्यापि तु विश्वस्येतिहासे जवाहर उदात्तेन चरित्रेण, सौशील्यसुगन्धेन, अनुपमया लोकसेवया, सत्यभक्त्या, शान्तिरत्या, अप्रतिमया लेखनप्रतिभया ज शाश्वत स्थान प्राप्स्यति, महामानवगणनाप्रसङ्गे सबहुमान च स्मृत प्रज्ञावता प्रेरणाबीज भविष्यति।





# प्रतिभापुञ्जः श्रीमुन्शी

**लक्ष्मीर्यास्यति गोविन्दे सुरश्रीः सुरवेश्मनि।**
**गते मुन्शीप्रभापुञ्जे निरालम्बा सरस्वती॥**

श्रीमुन्शीहीरकमहोत्सवे पुण्यश्लोकै श्रीराजेन्द्रप्रसादैरवोचि "अनेकेषु क्षेत्रेष्वनितरसाधारण्या प्रतिभया प्राप्तोत्कर्षाय तुभ्य नम" इति। श्री मुन्शीमहाशयस्येतिवृत्त जानन्त सर्वेऽप्यनेन बचोरत्नेन निर्विवाद सम्मता भवेयुरिति विश्वस्यते।

**श्रीकन्हैयालाल माणिकलाल मुन्शी** महोदयस्य जन्म १८८७ तमे ख्रिस्ताब्दे दिसम्बरमासस्य ३० तमे दिनाङ्के गुर्जरप्रदेशे भृगुकच्छ (भडोच) नगरेऽभवत्। भार्गवब्राह्मणाना विद्याया राजसद सु च प्रसिद्धे वशे जातोऽय बाल्य एव परगु-

रामागस्त्य विश्वामित्रादीनां भारतीयसंस्कृतिबीजरूपाणां जीवने, उपदेशेषु च परमं श्रद्धालुरभवत्। 'भगवान् परशुराम' इत्यादीनां ग्रन्थमणीनां जनिरप्येनमेव नरोत्तमेषु भक्त्यतिशयं प्रकाशयते।

बाल्य एव पिता 'माणेकलाल' स्वर्गतः। पितरि द्युलोकं प्रस्थिते 'जीजीमा' इति पुण्यनाम्नी मातैव मुन्शीमहाशयस्य संवर्धने विनयने च धनभाराऽभवत्। शिवराजमाता 'जीजाजी' इवेयमपि शिशुं क्रोडे कृत्वा रामायण-महाभारतादीनां प्रकृष्टचरितैः तन्वेतं स्नपयति स्म। कथासु कथ्यमानासु विस्फारितनयनश्च बालोऽयं भीममिवात्मानं, अर्जुनमिव च पुरुषार्थमूर्तिमात्मानमभावयत्।

त्रयोदशे एव हायने बालदर्शनोऽप्यबालबुद्धिरयं बटुः 'मेट्रिक' परीक्षामुत्तीर्य बहूनामाश्चर्यप्रमोदकरः समभवत्। ततः उच्चज्ञानायानतिदूरे बडोदानगरे प्रेषितः। तत्र वयसा लघीयानपि बुद्ध्या प्रौढोऽयं बटुः सतीर्थ्यानां गुरूणाञ्च समानमाकर्षणमासीत्। तत्रैव महायोगिनः, क्रान्तिकारश्रेष्ठस्य, अरविन्दघोषस्य शिष्यतावाप्ता। श्रीघोषस्य सत्रामिक्या देशभक्त्या, भारतीयसंस्कृतिप्रेम्णा च स्वात्मा सर्वतः सम्भावितो बालमुन्शिना।

वटपुरे बी ए परीक्षामुत्तीर्य, विधानशिक्षायै मुम्बापुरीं प्रयातः मुन्शी। तत्र चाध्ययनेन सहार्थनाभाय गुर्जरभाषामयी रचना अप्यारब्धा। अस्य रचनासु जीवनामिव समस्तानां पात्राणां सृष्टिम् अपूर्वतया विलोकयन्तस्तदानीन्तनाः शिष्टाः कोऽयं कोऽयम्? इति साम्रेडितं मिथोऽपृच्छन्। कृत्रिमनाम्ना विविधा विचित्राश्च कथा उपविंशतिवर्षवयस्को युवा एव लिखतीति चेदुक्तमभविष्यत् तदा न कोऽपि तत् श्रदधास्यत्। तदनु गुर्जरेतिहासं सामाजिकीं च तदानीं परिस्थितिमाश्रित्यानेके उपन्यासाश्च विरचिताः श्रीमुन्शीमहाभागेन ये विविधदृष्ट्याऽपूर्वा नवीनामेव साहित्यिकीं शैलीं दृष्टिं च प्रबोधितवन्तः। इमाः कृतीरुपजीव्यानेकानि नाटकानि पटचित्राणि च प्रादुर्भूतानि परस्तात्।

वार्धकेऽपि, शिथिलितेष्वपि गात्रेषु, श्रीमुन्शीमहाशयस्य लेखनप्रवृत्तिरनर्गलं प्रवर्तमानैवावर्तत। गुर्जरभाषायामाङ्ग्लभाषायां च मुन्शीमहा-

भागस्य संस्कृति-इतिहास-पुराणोपन्यास-नाटक-काव्यनिबंध-मधुकर्येति प्राय सर्वास्वपि साहित्यशाखासु अप्रतिहत गतयश्च प्रमाणोऽस्वनेन।

किन्तु मुन्शीमहाशयो न केवल लेखक। विधानशास्त्रित्वेन, शिक्षाशास्त्रित्वेन, शासकत्वेन, राज्यपालत्वेन, शिक्षासंस्थानां स्थापकत्वेन, सांस्कृतिकाभ्युदयशीलत्वेन च सममेव व्यराजत श्रीमुन्शीचरितम्। भारतस्य स्वतंत्रतात्मके विधाने बहुपकृत श्रीमुन्शीमहाशयेन। मुम्बापुर्यां हिन्दू मुसलमानानां हिंसक कलह कदाचित् घटितासूपशमस्य प्रदर्शितमनेन शासनपाटवम्।

भारतीयविद्याभवनस्य स्थापनाद्वारा भारतीयसस्कृते प्राचीनाना तत्त्वाना रक्षणेन सह, नवीनाना विभिन्नप्रजासंसर्गजानाना विज्ञानयुगीनाना तत्त्वाना सवर्धस्थापनाय, महानासीत् प्रयत्न श्रीमुन्शीमहाभागस्य। अत एवात्र प्राचीनपरपरानुसारी संस्कृतमहाविद्यालय इव नवीनकलाशाला, विज्ञानशाला स्थापत्यादिविद्याशाला च सममेव प्रवर्तन्ते। सशोधनविभागमुखेन च प्राचीनस्य साहित्यस्य सशोधन, प्रकाशन, भारतीमैतिहासरचन, सास्कृतिकव्याख्यानायोजन सांस्कृतिकसाहित्यप्रकटनमित्यादयो भवन्ति क्रियाकलापा भवनस्य।

एव विविधासु प्रवृत्तिदिक्षु प्राप्तप्रकर्षस्यापि मुन्शीमहोदयस्य जीवन शिशुसरल देशसेवापरम् उदारञ्चावर्तत। स खलु लब्धमपि महान्त विधानविद्याप्रकर्ष उपेक्ष्य, महात्मनो गान्धिन आदेश शिरसि कृत्वानेकश सत्याग्रहनिमित्त कारावास अङ्गीकृतवान्। अनेकेषा शूलारोपणशिक्षा लब्धवता राष्ट्रसेवकाना च प्राणा रक्षिता विधानविद्याकौशलेन। अनेकासा सस्थाना उद्भावनेन, पोषणेन च वाग्देवी निपुण समाराधिता।

राजकीयविषयेषु सत्स्वपि मतभेदेषु, राष्ट्रे विपदग्रस्ते, श्रीमुन्शीमहाशय प्रतिपक्षै सह सम्मिल्य भारतमातुरैक्यरक्षार्थं, विदेशीयेभ्यो रक्षणाय च सदैव बद्धकटिरास्त। न कदापि प्रादेशिकी भावना प्रविशति स्म तच्चेत। समग्रो भारतदेशो मे जन्मभूमि, तस्यैकदेश प्राप्ता विपद् समग्रदेशस्य सेति

चानेकशो व्याख्यानैर्लेखै कर्मभिश्च स प्रतिपादयन्ति स्म। अङ्गुलिच्छेद नून समग्र कार्यं कदर्थयति।

चिरनिद्रात जाग्रदस्मान् देश येषा महापुरुषाणा प्रयासैरनुगृहीत, येभ्यश्च महदृण धारयति तेषु श्रीमुन्शीमहाशयस्यापि निश्चित स्थान भवति।

## अखंडभारतस्योद्गाता

जिन्नाधिष्ठिता 'मुस्लिमलिग' यदा भारतस्य विभाजनाय बद्धपरिकराऽऽसीत् तदा मुन्शीमहाभागो देशस्यैक्यरक्षार्थं नैकविधानुपायानाद्रियन। 'अखड भारत' इति ग्रथ विरच्य, तत्र तेन भारतस्य विभाजन कथमयुक्तमिति बह्वीभिर्युक्तिभि साधितम्। यदि दुर्दैवाद् विभाजन चेद् भवेत् कीदृशा अनर्था सपत्स्येयु। कथङ्कार भारतस्यार्थिक-राजकीय रक्षासबन्धिनी च भूयसी दुरवस्था भवेदिति च तत्र सविमर्शं तेन प्रदर्शितम्। हन्त! अद्य विभक्ते भारते तत्सर्वमेव सत्यमिति वय साक्षात्कुर्म।

## संस्कृतसेवा

मुन्शीमहाशयस्य वैदिकधर्मे, सस्कृतभाषायाञ्च विरलविरला प्रीतिरासीत्। वैदिकधर्मप्रीतिरितस्तेन वैदिकर्षिसबन्धीनि नाटकादीनि विरच्य प्रकाशिता। सस्कृतप्रीतिश्च प्रथम भारतीयविद्याभवनस्य तदनु च सस्कृतविश्वपरिषद स्थापनया प्रकटिता। सस्कृतविश्वपरिषद द्वारीकृत्य, तेन भारतराष्ट्रे सस्कृतशिक्षाया प्रचार प्रसार सवर्धनञ्च व्यापकरूपेण साधयितु सफला उपाया आस्थीयन्त। तत्र तत्र प्रदेशेषु परिषदोऽस्या अष्टाधिवेशनानि आयोजितानि। अधिवेशनस्य सर्वोऽपि भारस्तत्तद्राज्यशासनेन ऊढ आसीत्। यत्राधिवेशनमभूत् तत्प्रदेशस्य राज्यपालो मन्त्रिणश्च सोत्साह परिषदायोजने नियोग प्रापिता। परिषद सम्मान्य अध्यक्षश्च पुण्यश्लोक श्री राजेन्द्रप्रसाद महाभाग आसीत्। राष्ट्रपतेस्तस्योपस्थित्या सस्कृतमहात्म्यप्रकाशनेन च सर्वत्र देशे विदेशेषु च सस्कृतगरिमा साधु प्रकाशितोऽभवत्। वर्तमानपत्रेषु विस्तीर्ण प्रचारोऽभूत्। परिषन्माध्यमेन, तदानीन्तना लोक-

वरिष्ठा श्री राधाकृष्ण', उच्चन्यायालयमुख्यप्राड्विवाक श्री. पतञ्जलि शास्त्री, लोकसभाध्यक्ष श्री अनतशयन अय्यगर, मेधाविश्रेष्ठ श्री सी पी रामस्वामी अय्यर, तथा श्री पनीक्कर –एते अन्ये चोद्भटा महामानवा सस्कृतकार्ये सयोजिता । एतेयाञ्च प्रतिनिधिदल विरच्य, तद्द्वारा श्री नेहरू महाभाग सस्कृतसेवायै प्रार्थित । येन रव सुनीतिकुमार चेटर्जी प्रामुख्ये 'सस्कृतायोग'स्य रचनाऽक्रियत। आयोगश्च स सर्वत्र देशभागेषु परिभ्राम्य, सस्कृतविदुषो मिलित्वा, सस्कृतस्य परिस्थिति तदुद्धाराय च कर्तव्यानुपायान् सम्यगवबुबोध। ततश्च आयोगोऽय सस्कृतस्थिति, तद्रक्षणावश्यकता, तदुपायाश्चेत्येतत्सर्व सञ्चित्य, वृत्तरूपेण महाग्रन्थ (Report) प्राकाशयत्। एतत्फलरूपेण केन्द्रशासन प्रदेशशासनानि च सस्कृतशिक्षार्थ विविधानुपाया-नाद्रियन्त ।

आयोगवृत्तोपदेशफलरूपेण च 'सस्कृतसमिति' (Sanskrit Board) रचिता केन्द्रशासनेन। तच्चानुसृत्य बहुभि प्रदेशशासनै सस्कृतसमितयो रचिता। तदुपदेशानुसार च प्रवर्तमानाना सस्कृतविद्यालयाना साह्य नवीनानाञ्चोद्भावन समनुष्ठीयत।

मुन्शीमहाशये राजपालपदाधिरूढे उत्तर प्रदेशस्य प्रधानमन्त्री सस्कृतस्य च महापडित श्री सपूर्णानन्द आसीत्। राज्यपाल-प्रधानमन्त्रिणो शुभसङ्कल्पेन च तदा वाराणस्या राजकीय सस्कृतमहाविद्यालयस्य (क्विन्स कॉलेजस्य) वाराणसेय सस्कृतविश्वविद्यालयरूपेण परिवर्तनमभवत् (विश्वविद्यालयोऽय परस्तात् वाराणसेयस्थाने सपूर्णानन्दनाम्ना प्रथा लम्भित)।

मुन्शीमहाशय स्वय महत्कर्मणामनुष्ठाता सन् अन्यैरभियुक्तैर्महापुरुषै कार्य साधयितुमनितरसाधारणी शक्तिमावहत्। सोमनाथज्योतिर्लिङ्गस्य पुन प्रतिष्ठा, तद्भव्यमन्दिरस्य रचना, स विश्वपरिषन्मुखेन सस्कृतस्य विसृमरा सेवा, भारतीय विद्या भवनस्य कार्यकलापा, इत्येतत्सर्व तत्कार्य-दक्षता प्रभावातिशय च प्रकटयन्ति।

वनमहोत्सवस्य प्रवर्तना भारतकृपिम त्रिपद वहता श्रीमुन्शीमहाभागेन कृता। वन्यसम्पत्ते रक्षा अस्माक जीवने नीयदावश्यकीति स सावष्टम्भ न्यरूपयदनकश । वनाना वृक्षाणा चानर्गलध्वसो वहुमुखी हानि करोतीति स असकृदमापत

## संस्कृतविदुषामभ्यर्हणा

"सस्कृत चेज्जीवति भारत भारत स्यादि"ति नैकशो वदति स्म मुन्शी-महाशय । प्राचीनार्वाचीनेति प्रकारद्वयेनापि सस्कृतशिक्षा प्रवर्तनामिति म दृढमभिप्रैति स्म। तत्रापि मस्कृतस्य जीवद्भाषात्वेनोपयोग कुर्वत्सु प्राचीन-पण्डितेपु पाठशालीयशिक्षाप्रणाल्या च, तस्याभ्क्तिरा प्रीतिरासीत्। यदा कश्चित्सुदामसदृश कुचैलो दरिद्रो पण्डितस्त द्रष्टुमागच्छद् विना विलम्ब स साक्षात्कारमलभत। मृदुलैर्वाक्यैस्त साधु सम्मान्य वित्त च वितीर्य, स सबहुमान विर्मजित इति नैकशो साक्षात्कृतमस्माभि ।

आसन्नशरीरत्याग श्री मुन्शी शास्त्रचर्चया, परमेशस्तोत्र भजनादि-श्रवणेन चाधिक कालमत्यवाहयत्। सम्कृतभाषाया शब्दानामर्थान्तर्भावन-शक्ति परिभाव्य, स भृश परिताप मोद चावाप। अन्तिममासेपु शिथिल-तनु स मा भगवद्गीता पदशो विवेक्तुमचकथत्। 'गीतामाश्रित्याङ्लभाषया रचित भवत्पुस्तकरत्न दशावृत्ती प्राप्तमस्ति। एतादृश गीतामर्मज्ञ भवन्त किमह बोधयेयम्' इति विज्ञापितो मया स मतिमता वरोऽवदत् –"तिष्ठतु सा पुस्तकवार्ता, सामान्यजनोपयोगाय तत्। अहन्तु अन्न कृतसाराणा गीता-पदाना व्युत्पत्तिगर्भमर्थ जिज्ञासामि। भगवत कृष्णस्य व्यासस्य च हृदय गीताशब्दै सुपरिज्ञातैरेव प्रवेष्टु शक्यम्। तदेव कामये। बोधयतु मा प्रतिपद गीतातत्त्वम् । इति। तदनु यथामति पदशो व्याख्यान क्रियमाणे, गीतार्थं श्रावश्राव पुण्यात्मा सोऽलौकिकमानन्दमनुभवति स्मेति तन्मुखचक्षुषोर्विकासेन विदितमासीत्।

तस्य वेदादिशास्त्रेपु महती निष्ठाऽऽसीत्। कर्मकाण्डे नवशिक्षावता-मौदासीन्य त दुनोति स्म। 'विना कर्मकाण्डानुष्ठान, पुराणादिकथाश्रवण,

देवालयादिगमन च न धर्म प्ररोहति बालेषु सामान्यजनेषु चेति तस्यानुभवपवर्व मतमासीत्। कर्मकाण्डकर्तारो विद्वासोऽपि यथायथ मन्त्रादीनुच्चरेयु, विधिगताना क्रियाकलापाना रहस्य च प्रबोधयेयु. येन तदनुष्ठायिना मन समाहित स्याद्। तेषा श्रद्धा च सवर्धेत" इत्यपि अमन्यत।

वयमात्मनः पूर्वजेषु गौरवं दधीमहि, गीताविशास्त्राणि च सुपरिशील्य सुशीलाः, आत्मगौरववन्तश्च भवेमेति असकृदुपदिशति स्म मुन्शीमहाशयः। हिन्दूनां धर्मः, अध्यात्मविद्या, जीवनादर्शाश्च सर्वानितरानतिशेरते इत्यासीत्तस्य विमर्शपूतं मतम्।

महामना पुरुषर्षभोऽय १९७१ ख्रिस्ताब्दस्य फरवरीमासस्याष्टमतारिकाया पार्थिव देहमत्यजत्। अस्य निर्वाण श्रुत्वा महान्त सामान्याश्च लक्षशो जनास्तस्मै श्रद्धाञ्जलिमर्पयितु परापतन्। सर्वक्षेत्रेष्वसाधारण प्रतिभापुञ्ज च त नेत्रवारिभिस्तर्पयामासु।



# लालबहादुरशास्त्री

रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोषगते द्विरेफे,
हा हन्त ! हन्त ! नलिनीं गज उज्जहार ॥

परिवर्तिनि संसारे मृतः को वा न जायते ।
स जातो येन जातेन याति वंशः (देश·) समुन्नतिम् ॥ भर्तृहरिः

को वा विजानाति विधेर्वक्र क्रमम् !

भारतमातु प्रियतम पुत्र रसनगरात् ताश्कदात्प्रत्यागमने सत्कर्तुकामा भारतीया सहमैव अज्ञातपाता, मर्मभेदिनी श्रीलालबहादुरशास्त्रिणो निधन-वार्तामभृण्वन् प्रभातायामेव रजन्याम् । वहव –येष्वय जनोऽन्यतमो भवति– नभोवाणीकेन्द्रस्य ऐतद्दीया सूचना भूयो भूय. श्रुत्वाऽपि, कर्णदोषो नु किं स्यात् ! वक्तुर्विभ्रमो वा किमयम् ? इति वार्तामिमा अविश्वास्याममसत । किन्तु हन्त ! कीयदात्मा वृत्तात् क्रूरविधिकर्मणा गोपायितु शक्य ! भारताकाशस्य भानुरस्त गत इति वस्तुस्थिति स्वीकर्तव्यैव समापतिता।

"शासनाग्रण्या तत्त्वविदा भाव्यम्" इत्यभणत् पाश्चात्यतत्त्वविदा वर 'प्लेटो'। ऐहिके सुखे निरादर, प्राचीनाया स्वसस्कृतावमितभक्ति, शरीरदौस्थ्यमप्यविगण्य राष्ट्रसेवैकपर, महत्पदमारूढोऽपि प्रख्यातिविमुख, अगाधहृदयोऽपि बालकल्प श्रीशास्त्री भारतीयाया सस्कृतेर्यथार्थं विग्रहवत्स्वरूपमभवत्।

सस्कृतसेविना सुचिरसपर्कात्, भारतीयसत्त्वस्य सस्कृत दृढस्थिर्ति च जानतोऽस्य महानुभावस्य भाषाया तस्या निरतिशयाऽभूत्प्रीति। स्वय सस्कृतविद्याया कृतश्रमस्यास्य तत्गुणाकर सुपरिचितोऽभवत्। अत सस्कृतप्रचारप्रवृत्ताना सस्थाना बहु साह्य वितीर्णं श्रीशास्त्रिणा। भारतीयसस्कृतिप्रेमिण सस्कृतसमुपासकाश्चाद्य नून वैधुर्यग्रस्ता अश्रूणि मुञ्चन्त, अनाथमात्मान कलयन्ति।

## जीवनम्

लालबहादुरस्य पिता शारदाप्रसाद श्रीवास्तव, माता च रामदुलारीति गुणमपत्या प्रथितयशसावास्ताम्। पत्नी ललिता देवी, द्वे कन्ये त्रयश्च पुत्रा समपद्यन्त।

सार्धैकहायन एव लालबहादुर दिव प्रस्थितेन जनकेन परित्यक्त। अनाथा जननी तमादाय मोगलसराईपत्तने पितृकुलमशिश्रयत्। मातामहेन तत्र वात्सल्यवर्षया लालित पालितश्च प्राथमिकी शिक्षामध्यगच्छत्। तत काशिवासिन उदारचरितस्य मातुलस्य सविधे स्थितो बालो लालो माध्यमिकी शिक्षाम् अविन्दत्। तत्र षोडशवर्षदेशीय एव पुण्यश्लोकेन गान्धिना उद्घोषिते स्वातन्त्र्ययुद्धे, सैनिको भूत्वा कारावास स्वयमवृणुत। तदनु 'काशीविद्यापीठे' आचार्यभगवानदास-नरेन्द्रदेव-कृपलानी-सपूर्णानदसदृशै राष्ट्रभावनाभरितैर्विद्यापारदृश्वभिर्विनीतोऽय राष्ट्रसेवामनन्यकर्मरूपामगणयत्। स हि आहत्य नव वर्षाणि कारावास तीर्थस्थितिमिवाभुनक्।

तत प्रशान्तस्वभावस्य, धनेन, गर्वेण, शरीरप्रकर्षेण, वाग्विभवेन च

रहितस्य पुरुषोत्तमस्यास्य तूष्णीमनुष्ठितानि राष्ट्रकार्याणि केषाञ्चिदेव दृष्टिपथमायान्ति स्म। उत्तरप्रदेशस्य तन्मण्डलमन्तरा नान्यत्र तस्याभवत्ख्यातिः ।

लालालाजपतरायेण प्रस्थापिते 'भारतसेवकसघे' सदस्यता वहन् श्री शास्त्री परिमितव्यवहारादवशिष्ट सर्वमपि धन समार्पयत् सघाय । नून अपरिग्रहव्रतेऽस्य परा निष्ठा ।

प्रथम उत्तरप्रदेशशासने मन्त्रिपद निरुह्य, श्रीनेहरुमहाशयप्रेरणया पूर्व राष्ट्रियमहासभाया मन्त्रिपद तदनु च केन्द्रशासनस्य वाहनविभागमन्त्रित्वमभजत् । धूमशकटदुर्घटनासु च मन्त्रित्वेन स्व दायभाज प्रकाश्य महार्हादपि तत्पदाद्विरतिमभजत । अहो निष्ठा शास्त्रिवरस्य प्रजातन्त्रनियमानुसरणे !

पुन गृहमन्त्रिपदमारोपित, तदनु वाणिज्यमन्त्रिपद च प्राप्त । कामराजविधिमनुसृत्य पुन तत्त्यागमकल्पयत् ।

किन्तु शास्त्रिण मूक कार्यकरणशक्ति, जटिलानामपि कर्मणा ग्रथिभेदसामर्थ्यञ्च सदैव प्रतीक्षितऽभूताम्। अत श्रीनेहरुणा पुन प्रार्थित स महाभाग अनिश्चितकार्यविभागे मन्त्रिपदे प्रतिष्ठापित । विकलस्वास्थ्यस्य श्रीनेहरोरभीष्ट साह्य कर्तुमयमेवेष्ट इति विदन्ति स्म तज्ज्ञा ।

तदैव नेपाल-काश्मीरादिप्रदेशगता विवादा अप्रतिमेन कौशलेन प्रशमिता श्रीशास्त्रिणा । भारतभुव्येव सर्वाधितोऽस्य, प्रधानामात्यो भूत्वैव प्रथमतया देशान्तराणि गत आसीत् कर्तव्यनीत ।

दिव प्रस्थिते भारतनौकर्णधारे श्रीनेहरुमहाभागे को वा तत्पदे पद निधातु क्षमेतेति विचारविमूढा अभूवन् भारतीया नेतारो जनाश्च । विचक्षणेन कामराजेन अजातशत्रु, पक्षप्रतिपक्षमान्य, तूष्णी कार्यपटु श्रीशास्त्री एव सागरतरणे जाम्बवता हनुमानिव कर्मण्यस्मिन् विचारित, विना विमतिमनुमोदितश्च सर्वे ।

किन्तु तदनतर प्रावृषि वर्षाधारा इव सर्वा अपि आपद सम्भूय समापतिता भारतशीर्षे। वामनाकृतिर्मृदुभाषी श्रीशास्त्री आपदब्धेरस्य भारतनाव पर पार नेतु प्रभवेद्वेति सशीतिग्रस्ता अभवन् भारतीया । किन्तु हन्त ! भाषाविवादा वा, अन्नसमस्या वा, विदेशनाणकदुष्प्राप्तिर्वा, पाकस्य कच्छप्रदेशाक्रमण वा, काश्मीरनेतृणा मिथ कलहो वा, सर्वे एते प्रश्ना शीतेन बुद्धिपाटवेन प्रशमिता प्रशमनमार्ग वा प्रापिता श्रीशास्त्रिणा । गुरोरपि प्रभावोऽतिशयित शिष्यवरेण ।

शास्त्रिण सत्त्वस्य पराकाष्ठा तु अचिरवृत्तेन पाककृतेन काश्मीराक्रमणेनाद्भुत प्रकाशिता । चीन-पाकयोर्युगपदाक्रमणेऽपि दृढ धैर्यमालम्ब्य, तत्प्रतिकाराय सैन्य प्रजाश्चोदबोधयत । न कदापि तस्य वाणी श्लथिता, न बुद्धिर्व्यामोह प्राप्ता, नापि तेन किमपि पद परस्ताच्छोकजनक न्यधायि ।

भारतीयसस्कृत सुरभिकुसुममासीत् श्रीशास्त्री । ईशपरायणस्य विश्वबन्धुत्वव्रतिन महात्मनो गान्धिन स परम शिष्य । शान्तिदूतस्य नेहरोश्च समानशील सखाऽऽसीत् शास्त्री ।

*अत समापतिते युद्धे धैर्येण प्रवृत्तोऽप्यसौ स्वभावतो दारुणपरिणाम युद्ध,* तज्जनितजननाश च दर्शदर्श भृश समतप्यत । अत प्राप्तेऽवसरे स रूसाधिपतिना ताशकदसभाया पाकाध्यक्षेण मिलितु गत । यथासम्भव भारतहिताय प्रयासाश्चायोजयत् शान्तिस्थापनार्थम् ।

हन्त ! तस्य मरणसवादस्य पञ्चाननन्दिना जनता वज्रपातमिव सप्रधनवार्ता श्रुतवती ।

'बहुरत्ना वसुधरा' इति जानन्तोऽपि वय सत्स्वपि बहुरत्नेषु सर्वाणि तानि न शास्त्रिगुणसमानीति न विस्मर्तु पार्याम ।

> शैले शैले न माणिक्यं चन्दनं न वने वने ।
> साधवो नहि सर्वत्र मौक्तिकं न गजे गजे ॥

आ अन्तिमश्वास भारतमातु सेवाव्रतिने श्रीलालबहादुरशास्त्रिणे भारतीया अद्यतनीया भविष्यन्तो च जनता समर्पयन्ति निष्ठा स्मरिष्यति च ।

(ललितकलाकाशा प्रकाशित श्रद्धाञ्जलि )

★

# ज्ञाननिधिः संस्कृतम्

**यावद् गंगा च गोदा च यावद्विन्ध्यहिमालयौ ।**
**यावद् भरतवर्षं स्यात् तावदेव हि संस्कृतम् ॥**

एतद् वच पुण्यश्लोकस्य मोक्षमुलरस्य भवति । अनेन हि भारतीय-प्राचीनवाङ्मयसागरे निपुण निमज्ज्य तता विचाररत्नान्याहृत्य सर्वत प्रथम विदेशेषु प्रसारितान्यासन् । संस्कृतवाङ्मयस्यानुपम तेज, आत्मन आवर्जक, बुद्धेस्तर्पकञ्च सत्त्वमापीयैवाय सहृदय संस्कृतस्य भारतस्य च सञ्जीवन सहमरणञ्च विभावयामास ।

उत्पातभूयिष्ठे सागरे निमज्जन्ती नाव, आत्मन एकमात्र तरणोपायमाक-लयन् यथा कुशलो नाविक सर्वात्मना ता रक्षितु प्रवर्तत तथैव प्राचीना भारतीया स्वमर्वस्वनिधिभूता संस्कृतसरस्वती वैदेशिकोपद्रवमागराद् रक्षितु-मयतन्त । देशेऽत्र बहवो धर्मान्धा ममागच्छन्, यै ग्रथागारा अग्निमात्कृता, विद्वासश्चासिधारापद प्रापिता । तथापि विद्यैकनिष्ठा विप्रा स्मृतिमात् कृत संस्कृतनिधि बहुश्रेन रक्षितवन्त, दायादरूपेण च स्वमन्ततिभ्य समर्पितवन्त ।

अग्निकाल यावदस्खलित प्राणनमेव संस्कृतभाषाया अन्त भार प्रमाणयति । भारतीयचेतनाया मानयन्त्र संस्कृतमिति प्रमिण्वन्ति इतिहासविद । भार-तीयाया उन्नतेरवनतेश्चाविनाभावसबद्धोऽस्ति संस्कृतोन्नत्यवनत्यो । तदानदा ग्लपयन्ती भारतीया चेतना संस्कृतवाङ्मयमेव नवीनेनोत्साहेन समूना विदधे । संस्कृतप्रसूता भारतीयजागृतिरिति अनिमशनाब्दस्यैनिहासावगाहनेनापि प्रमाणित भवति ।

भारतीयस्य विधानस्य (constitution) निर्माणावमर राष्ट्रभाषा का स्यादिति विचार प्रावर्तत । तदा स्व डॉ. आंबेडकर, स्व डॉ कैलासनाथ

कालेऽपि च संस्कृतमेव सर्वं प्रान्तभाषाभ्यन्तरेणाम्। तदा डॉ० बी० आर० गें बहूनामपि विचारं व्याख्यानं प्रावर्तत्। किन्तु हन्त ! संस्कृतभाषा हिन्दूनां धर्मभाषेति व्याजेन विचारोऽयं नादृत आसीत्। तदनु च संस्कृत हिन्दीभाषाया राष्ट्रभाषात्वमङ्गीकृतमासीत्। अद्यमस्मुतम्म धैर्यवता न केनापि तदनु प्रवर्तिता भाषापदवी एव प्रमाणम्।

वस्तुतः संस्कृतभाषाया हिन्दूनां धार्मिकभाषात्वेन वर्णनं नियतमात्र इति हेतुना असाम्प्रदायिके भारते स्वीकृतेऽपि तस्या उपेक्षा न युक्तिसङ्गता भवति। धर्मनिरपेक्षा भारतीया राजनीतिः संस्कृतस्य राष्ट्रभाषात्वेन विप्रकृता स्यादिति प्रवादो न विचारसहो वर्तते। देशेऽत्र पूर्वं हिन्दव एवावसन्। अतस्तेषां धर्मसाहित्यं प्राचीनतमायां संस्कृतभाषायां स्यादिति स्वाभाविकम्। किन्तु न तत् साहित्यं मनुष्यता साम्प्रदायिकता पुष्णाति, अपि तु सर्वधर्मसहिष्णुता सदाचारनिष्ठा विश्वात्मैक्यभावनामेव पुरस्करोति। न च संस्कृतवाङ्मय धर्म-अध्यात्ममात्रपर वर्तते। तत्र खलु शिल्प, संगीतादिकला, आयुर्वेदम्, धर्मनिरपेक्षदर्शनानि, अनुत्तम गणित साहित्य, ज्योतिषञ्चेति विविधा विद्याशाखा प्रौढाङ्कुर्वद्वर्तन्ते। अन्यास्वपि भाषासु तत्तद्भाषाभाषिणां बहुसंख्यजनानां धर्मसाहित्य वर्तत एव। न तावता तद्भाषा साम्प्रदायिकीति गण्यते। अतो न संस्कृतभाषा हिन्दूना धर्मभाषेति मत युक्तियुक्त भवति।

इतिहासदृष्ट्यापि संस्कृत हिन्दूनामेव धर्मभाषेति वचो न प्रमाणम्। शाहजहापुत्रेण दारानाम्ना संस्कृत गभीरमधीयोपनिषदां फारसीभाषया-ऽनुवाद कृत आसीत्। जहांगीरसदृशा मुस्लिमराजा संस्कृतकवीन् जगन्नाथ-प्रभृतीन् सबहुमानमपुष्यन् तथा काव्यरसञ्च निमीलितनयनमपिबन्। बृहत्कथामञ्जरी, पञ्चतन्त्रम्, रामायण, महाभारत चेति ग्रथमणय द्विसहस्र-वर्षेभ्य पूर्वमेव आरबदेशान् तद्द्वारा च युरोपदेशान् समचरन्। भारतीयेन गणितज्ञेन शून्य (०) गवेषणया वैज्ञानिकस्याभ्युदयस्यावश्यक साधन सपादित-मभूत् पश्चिमदेशेषु। भारताद् बहि एशियाखडस्य प्राय सर्वेषु देशेषु

संस्कृतवाङ्मयं मूलरूपेण, भाषान्तरं प्रविश्य च, प्रसृतमास्ते। बौद्धवाङ्मयं संस्कृतप्रचुरं वर्ततेऽस्ति तद्धर्मेण सह संस्कृतभाषाऽपि एशिया देशेषु प्रसृमरं प्रचारमाप। रशिया-काम्बोज-जावाप्रभृतिषु देशेषु पुरा भारतीया सहस्रशोऽवसन्। तदानीन्तनं तत्रस्थं स्थापत्यमपि भारतीयवाङ्मयप्रभावपूतं दृश्यते। अद्यापि तत्र संस्कृतनिबद्धा शिलालेखा लभ्यन्ते। हिन्देशियाया बहूनि स्थानानि जनाभिधानानि च संस्कृतसंस्कृतानि विद्यन्ते। विद्याप्रिया आङ्ग्ला अत्रागत्य सर्वेन प्रथमं संस्कृतभाषाया समृद्धिं दर्शंदर्शं मुग्धा अभूवन्। संस्कृतनिहिता च भारतस्य प्राचीना संस्कृतिमवबुध्य तदध्ययनरता अवर्तन्त। **विलियम् जोंन, मोक्षमुलर, युजिर बर्नुफ** प्रभृतयश्च संस्कृत एव भारतीयमात्मानं साक्षादकुर्वन् तदीयामाजस्विनी संस्कृतिं चावागच्छन्। संस्कृतवाङ्मयमेव तान् भारतीयामाध्यात्मिकी साधना विशाला धर्मदृष्टिं चावेदयत्। अत एव एते तदध्ययनाध्यापनद्वारा भारतीया सत्त्वपूर्णां प्राचीनामभ्युन्नतिं बहिर्देशेभ्य प्रावाशयन्। अर्वाचीनं भाषाशास्त्रं संस्कृतव्याकरणमुपजीव्यैवात्मानमलभत। एवं संस्कृतभाषा हिन्दूनां धर्ममात्रावगाहिनी भाषेत्याकलय्य तदनादरकरणं किल तस्या स्वरूपस्यैवनिह्नुत्य चाज्ञानप्रकाशनं भवति।

कलकत्ता-उच्चन्यायालयप्राड्विवाक, संस्कृतस्य चाग्रिम उपासक 'विलियम् जोंन' एवं भणिति —

—"संस्कृतस्य रचना विस्मयावहा, सा किल ग्रीक-लेटिनयो सम्पन्नतरा, नूनं तदीयं लालित्यं ते भाषे अतिशेते। तस्या उचितलाघवमनुपमम्। नियमनिगडितापीयं भाषा विपुलेन धातुविभवेन, व्याकरणसंपदा च युगानुरूपं नवनवान् शब्दानुत्पादयितुं क्षमते। इदमेव तस्या अमरत्वद्योतकं समृद्धिपोषकं च बलम्"। इति।

कश्चिदपृच्छत् पुष्पराजं नेहरू महाशयम्—"का नु भवति भारतस्योत्तमोत्तमा सम्पद्?" निशम्य च स सपद्येव प्रत्यभाषत—"संस्कृतं भाषा तद्गतं वाङ्मयं च"। संस्कृतमेव राष्ट्रस्याभ्युन्नतिहासकुसुमानां ग्रथनतन्तुरिति स समवदीत्।

संस्कृतभाषया रचनैव समग्रे भारते धर्म-संस्कृति-कला-आदर्श-ज्ञानादीना निष्प्रत्यूह विनिमय सुकर समपादयत्। तस्या भाषाया व्याकरणनियमै स्वरूपप्रच्युतिनिरोधो वस्तुनस्तस्या विभिन्नप्रदेशेषु विभिन्नकालेषु च सस्कारजातसातत्यपरिरक्षणायाकल्पत। एव च तस्या स्वरूपपरिवर्तनासहिष्णुता न दोषमपि तु महते गुणाय भवति। स्थानकालभेदेन परिवर्तमाना भाषा देशान्तरे कालान्तरे च दुर्बोधा भवति येन तस्या सनातनत्वाना वाहकत्व बाध्यते। सस्कृतभाषाया अप्येतादृशी दशा मा भूदिति हेतो पाणिनिना विभिन्नेषु प्रदेशेषु प्रचलता प्रयोगाणा सस्करण विधाय एकरूपता सपादिता। अनेन अत्यधिकविकल्पभारोऽपि परिहृत । अत एव वेदा , उपनिषद , रामायण, महाभारतञ्चेत्यादिवाड्मयमस्माकमैक्यस्याधारभूमि । देशेऽत्र विविधप्रदेशेषु भाषाणा, वेषस्य, भोजनादिप्रणालेश्च भेदे जाग्रत्यपि ऐक्यानुभूतौ सस्कृत भवत्यनुपमो हेतु । व्यास-वाल्मीकि-कालिदासा समग्रस्य देशस्य निधिभूता भवन्ति। ते कुत्राजायन्त, का च तेषा कर्मभूमिरिति नाद्यापि निश्चेतु पार्यते। यतो हि न ते कस्यापि प्रदेशस्य कस्याश्चिज्जातेर्वा विशेषता पुरस्कुर्वन्ति, अपि तु समग्र राष्ट्र समानभावेनाराधयन्ति, समग्रस्य च तस्योत्कर्षाय प्रतिभा प्रवर्तयन्ति। तेषा कृतिषु समग्रस्य भारतस्य प्राणा उच्छ्वसन्तो दृश्यन्त। तेषा वाड्मय सकीर्णतामुत्सार्य समग्रताया उद्बोधनार्थं प्रस्फुरद्वर्तत। सस्कृते किं न केवल भारतवर्ष, अपि तु समग्रा वसुधा एकनीडा सल्लक्ष्यते।

प्राचीनानामसीषा सर्वग्राहि वाड्मयमापीय सवृद्धा आधुनिका अपि रामकृष्ण परमहंस', स्वामी विवेकानद', स्वामी दयानदः, अरविंद घोष., महामना मालवीयः, रवीन्द्रनाथ ठाकुरः, महात्मा गाधी, राधाकृष्णन्, राजेन्द्रप्रसादः, कनैयालाल मुन्शी-येवमादय समग्रमेव राष्ट्र साकल्येनाराधयन्, तथाकर्तुं चास्मानुपादिशन्। अनेनैव चैक्यभावेन मधुक्षितान्त करणास्ते राष्ट्रिया चेतना प्राबोधयन्।

महाभारतादिषु पाणिनिपूर्वनिर्द्धेषु प्रयेषूपलभ्यमाना शब्दाना धातूनाञ्च केचन प्रयोगा परस्तान्निवारिता दृश्यन्ते। एतेन भाषागत बहुविकल्पप्रयुक्त

युगानुरूप नवनव ग्देशमुपन्यसितुमनुर गम्पूनगामर्थ्यं नाविदित प्रशा-वताम्। यानि ग्रथरत्नान्याश्रित्य श्रीमच्छकराचार्यो भारतीयजननाया आवश्यक वानानुरूपमद्वैतामरमुपदेशमुपाक्षिपत् तान्येवाश्रित्य कालान्तरे रामानुजाचार्य मध्वाचार्य, वल्लभाचार्य, ज्ञानदेव, अन्ये च चिन्तका त कालोपयोगिनमर्थान्तर प्राकाशयन्। गीतान एव युगेऽस्मिन् तिलकमहाशय कर्मयोगस्य, महात्मगाधिश्चानासक्तियोगस्य प्रकाशकमर्थमविन्दन्। एतादृशी नवनवार्थप्रसवशालिनी प्राणवती भाषा मृतेति वदता बुद्धिविषये किमु वक्तव्यम्?

अद्य वयमुद्देशहीन सघर्षभूयिष्ठञ्च जीवन यापयाम। नेतृणा प्रजानाञ्च सदाचारनिष्ठा वचोमात्रविश्रान्ता दृश्यते। सर्व किल स्वीय प्रदेश भाषा जाति वा बहु मन्यते। सकुचितमनसा तच्छ्रेयश्च राष्ट्रकल्याणेनापि साधयितु प्रवर्तन्ते। नैतिकमध पतन विषयीकृत्य प्रतिदिनमश्रूणि मुञ्चन्ति लोकनेतार। किन्तु न ते, नापि तेषामनुयायिन, नीतिह्रासस्य मुख्य कारण जानन्ति, जानन्तोऽपि वा तदुन्मूलनायाध्यवस्यन्ति। स्वातन्त्र्यात्पर वय सदाचारवल्ल्या सेचकानि पोषकाणि च तत्त्वान्युपेक्षामहे। मृदुवभावनामुपेक्ष्य व्यक्तिस्वातन्त्र्यमिषेण स्वाच्छन्द्य पोषयाम। असाम्प्रदायिकताव्याजेन सदाचारस्वरूपा धर्मनिष्ठा निन्दाम। भारतीयैक्यस्य चानुपम साधन सस्कृत तद्गतानादर्शांश्चोपहसाम। सत्येव किमन्यत् सपद्येत? बदरीबीजान्युप्त्वा न खलु श्रीफललाभ सभवति।

पुरातत्त्वविद, भाषाशास्त्रविदश्च सस्कृतस्य यारोपीयभाषाभिस्सह सबधमावेदयन्ति। तञ्च सबधमाश्रित्य विविधभाषाभाषिणा सुदीर्घे पूर्वकाले एकभूभागावस्थिति च तर्कयन्ति। भाषाशास्त्रेण सुनिश्चितमिद प्रतीयते यद् रुस-जर्मन-लेटिन-आङ्ग्लादिभाषा सस्कृतपरिवारभाषा भवन्तीति। तथा च भारतस्य जागतिक सबध द्योतयन्ती तद्द्वारा च सास्कृतिक भाषीय च वैश्वैक्य प्रबोधयन्तीय भाषा मानवसमाजस्य सौहार्दप्रस्थापने महदुपकर्तुं पारयति।

संस्कृतभाषाया एवैतेन समग्रे भारते धर्म-संस्कृति-कला-आदर्श-ज्ञानादीनां निष्प्रत्यूहं विनिमयं सुकरं समपादयत्। तस्या भाषाया व्याकरणनियमैः स्वस्यप्रच्युतिनिरोधो वस्तुतस्तस्या विभिन्नप्रदेशेषु विभिन्नकालेषु च संस्कारनानमात्रस्यपरिरक्षणायाकल्पत। एवं च तस्या स्वरूपपरिवर्तनाराहित्यता न दोषायापि तु महते गुणाय भवति। स्थानकालभेदेन परिवर्तमाना भाषा देशान्तरे कालान्तरे च दुर्बोधा भवति येन तस्या सनातनतत्त्वानां वाहकत्वं बाध्यते। संस्कृतभाषाया जत्पेतादृशी दशा मा भूदिति हेतो पाणिनिना विभिन्नेषु प्रदेशेषु प्रचलतां प्रयोगाणां समवायं विधाय एकरूपता सम्पादिता। अनेन अत्यधिकविकल्पभारोऽपि परिहृत। अत एव वेदा, उपनिषद रामायण, महाभारतञ्चेत्यादिवाङ्मयमस्माकं संस्कृतेराधारभूमि। देशेऽत्र विविधप्रदेशेषु भाषाणां, वेषस्य, भोजनादिप्रणालेश्च भेदे जातेऽपि ऐक्यानुभूतौ संस्कृत भवत्यनुपमो हेतु। व्यास-वाल्मीकि-कालिदासा समग्रस्य देशस्य निधिभूता भवन्ति। ते कुत्राजायन्त, का च तेषां कर्मभूमिरिति नाद्यापि निश्चेतुं पार्यते। यतो हि न ते कस्यापि प्रदेशस्य कस्याश्चिज्जातेर्वा विशेषता पुरस्कुर्वन्ति, अपि तु समग्रं राष्ट्रं समानभावेनागणयन्ति, समग्रस्य च तस्योत्कर्षाय प्रतिभा प्रवर्तयन्ति। तेषां कृतिषु समग्रस्य भारतस्य प्राणा उच्छ्वसन्तो दृश्यन्ते। तेषां वाङ्मयं सङ्कीर्णतामुत्सार्य समग्रताया उद्बोधनार्थं प्रस्फुरद्वर्तते। संस्कृते किल न केवलं भारतवर्षं, अपि तु समस्ता वसुधा एकनीडा लक्ष्यते।

प्राचीनानामर्षीणां सर्वग्राहि वाङ्मयमाश्रित्य सुबुद्धा आधुनिका अपि रामकृष्ण परमहंस, स्वामी विवेकानंद, स्वामी दयानन्द, अरविंद घोष, महामना मालवीय, रवीन्द्रनाथ ठाकुर, महात्मा गांधी, राधाकृष्णन्, राजेन्द्रप्रसाद, कन्हैयालाल मुन्शीत्येवमादय समग्रमेव राष्ट्रं सामञ्जस्येनाराधयन्, तथाकर्तुं चास्मानुपादिशन्। अनेनैव चैक्यभावेन सम्प्रति स्वतन्त्रे राष्ट्रिया चेतना प्राबोधयन्।

महाभारतादिषु पाणिनिपूर्ववर्तिग्रन्थेषु प्रयोगेषूपलभ्यमाना शब्दाना धातूनाञ्च केचन प्रयोगा पश्चात्तिरोहिता दृश्यन्ते। एतेन भाषायां बहुविकल्पनयुक्त

दुर्बोधत्वं निरस्य, विविधप्रयोजनसिद्धये, आवश्यकानां विकल्पानां संरक्षणमाद्रियते। पाणिनिना द्विसहस्रप्राया धातवः संगृहीताः। एभ्यश्च धातुभ्योऽर्थानुसारं कृदन्त-तद्धितप्रत्ययैर्नवीनाः शब्दा निष्पादयितुं शक्यन्ते। एतेन समये समये नवीनतया प्रस्फुरतां विचाराणां विषयाणाञ्चाभिव्यक्तये नवीनान् शब्दान् निर्मातुं सौकर्यमधिगतवतीयं भाषा। अयमेव संस्कृतभाषागतो विशेषो यद्द्वारेयं नवनवान् शब्दानादत्तुं साह्यं करोति भारतीयभाषाणाम्। भारतीयं नवीनं संविधानं बहूनपूर्वान् शब्दान् परिभाषाश्च धत्ते? आङ्ग्लभाषातः संविधानस्यास्य भारतीयभाषास्ववतारकाले संस्कृतभाषामाश्रित्यैव नवीनाः शब्दा निर्मीयन्ते। संविधानम्, राष्ट्रपतिः, राज्यपालः, लोकसभा, विधानसभा—इत्येवमादयः सर्वे नवीनाः शब्दाः संस्कृतभाषीया भवन्ति। अयञ्च संस्कृतमूलो नवीनभाषाप्रचयोऽन्यदपि श्रेयः साधयति। तेन च भारतीयासु सर्वासु भाषासु पारिभाषिका वैज्ञानिकाः, दार्शनिकाः, राजनीतिसंबद्धाश्च शब्दा एकरूपा भवन्ति। येन तादृश्यामेकस्यां भाषायां कृताधिकारो जनः भाषान्तरं विना विशेषश्रममवबुध्यति। एतेन विज्ञानादिसंशोधनकर्मणि संवादिता परस्परोपकारिता च परिपाल्यते। सर्वत्र देशे उपविषयत्वेनापि संस्कृताध्ययने प्रवर्तमाने एव अयं लाभोऽनुवर्तिष्यते नान्यथा।

भारतीयसंस्कृतिरध्यात्मनिष्ठा संस्कृतिः। अध्यात्मनिष्ठत्वादेवात्र "एकं सद् विप्रा बहुधा वदन्ति" इति तत्त्वविषयकः आग्रहाभावः परिपोष्यते। स्वस्वाधिकारानुसारं दृष्टिभेदः स्वाभाविक इति चोदारः समभाव आद्रियते। अत एव धर्ममाश्रित्य देशान्तरेष्विव नात्र क्वचिदपि कदाचिदपि परस्परगलच्छेदरूपाऽनर्थकारिणी प्रवृत्तिरासीद् प्राचीनकाले।

संस्कृते प्रतिष्ठितां समदृष्टिमुपजीव्य प्रवर्तमानो हिन्दूधर्मश्च धर्मान्तराणि न केवलमसहतापि तु तानादरेणापश्यत्। परन्तु तस्तानां पारसिक-यहूदी-ख्रिस्तधर्मिणामत्र ससम्मानं जीवनयात्रा प्रावर्तत। उपनिषदादिग्रन्थरत्नप्रसूताया विश्वात्मैक्यप्रबोधिकायाः संस्कृतेरस्याः संरक्षणं तेषां ग्रन्थानां मूलरूपेणानुसंधानं विना शशशृङ्गायेत। अतोऽपि संस्कृतशिक्षाया अविरतप्रवाह

प्रवर्तनीय । संस्कृतवाङ्मये भाषान्तरावताराक्षमा नैके विचारराशयो वर्तन्ते । तानुपजीव्यैव वयमद्य यावदस्माक बुद्धिविभव पोषयाम । तेषा सपर्कादिव चार्वाचीनभाषाणा चिन्तनराशि गभीरताञ्च वर्धयाम ।

## संस्कृतरक्षोपायानामपर्याप्तता

केन्द्रशासन कानिचन प्रदेशशासनानि च सस्कृतसाह्याय धन वितन्वन्ति। तेन च धनेन केचन विद्वास काश्चन सस्याश्च लाभान्विता भवन्ति। नैकाना ग्रथाना प्रकाशनमपि तादृशसाह्यमुपजीव्य जायते। अतस्तदवश्यमभ्यर्हणीय भवति। किंतु नवीनतया सस्कृताध्येतॄणा प्रोत्साहनाय नैतावतालम्। अध्ययनविषयो भवतु नाम महान् श्रद्धास्पदम्। नियता नाम सस्कृत-विद्याया भूरि प्रशसा। किन्त्वायत्या तेन जीविकालाभसभावनामन्तरा न कस्यापि तदाराधने साधीयसी प्रवृत्ति स्यात्। अध्यापनप्रवृत्तेरस्तमनेऽध्ययनप्रवृत्ते-रप्यस्त एव स्यात्। तथा सति नैव सस्कृतग्रथशोधकार्येणापि प्रयोजनम्। यतो हि तादृश्यामवस्थाया सशोध्य प्रकाशितान् ग्रथान् क पठिष्यति ? हन्त ! ग्रथराशिभिर्मण्डिता ग्रथागारा कीटापहारायैव प्रकल्प्येरन्। विनश्यदवस्य मूलमुपेक्ष्य शाखापत्रपुष्पाणा सरक्षणोपाय को वा प्रज्ञावानाद्रियेत ! अन्तिम-शताब्दे समग्रा शिक्षितसमाजोऽस्मत्प्राचीनसस्कारनिधिना परिचयमवाप सस्कृतशिक्षाद्वारा। शालामहाशालादिषु सस्कृतशिक्षाया अनिवार्यरूपेण पाठनव्यवस्थया सस्कृतभाषाया अध्ययने, प्राचीनाना लिपिग्रथाना सशोधने, मुद्रापणे, प्राचीनसस्कृतिप्रबोधपूर्वक नवीनाया जीवनव्यवस्थायाश्चानुप्राणने महानुपकार साधित । तथैव सस्कृतशब्दराशिग्रहणेन, सस्कृतस्यस्याभि-व्यक्तिसामर्थ्यस्य चात्मसात्करणेन, अर्वाचीनाना भाषाणा साहित्यसमृद्धि प्रतिपादनपटुता च साधु समृद्धे भवत । सस्कृतसबधविच्छेदे तु पुनस्ता शब्दरहस्यावबोधविकला नवनवशब्दनिर्माणशक्तिप्रच्याविताश्च स्व कार्य यथावदनुष्ठातुम समर्था भवेयु । सस्कृतनिष्ठस्य सर्वभाषासबधस्य च विगलि-तत्वाद् भारतीयाना साहित्यजन्या भावनासवाद सुतरा विगय गत स्यात्। एतत्सर्वं पर्यालोच्य सस्कृतभाषाया सबध आधुनिकविद्यासस्थासु अपरिहार्यो

विधेय इति निश्चित प्रतिभाति। तत्र तत्र प्रदेशेषु सस्कृताध्ययनस्य परित्याग केनापि मिषेण न भवितुमर्हति। अध्येयभाषाबाहुल्य, विषयबाहुल्य च पुरस्कृत्य छात्राणामध्यनभार परिहर्तुं सस्कृतोत्सारणमुपदिश्यते। तत्खलु न युक्तिसह पश्याम। सस्कृते ज्ञाते भारतीया प्राय सर्वा भाषा मूलतो ज्ञाता भवन्ति। विभिन्नविषयेषु प्रयुज्यमानाना प्रयोक्ष्यमाणाना च पारिभाषिकशब्दा-नामवबोध सुकरो भवति। विभिन्नभाषासबधश्च परिरक्षितस्तिष्ठतीत्येव सर्वं पर्यालोच्य, सस्कृताध्ययनमन्तरा न वैदुष्यपाक इति फलति। अतस्तस्या त्यागो बहुमुखमनर्थ जनयेत्।

यदि नाम सस्कृतशिक्षाया प्रतिष्ठामुपेक्ष्य सस्कृतभाषाया तद्वाङमयस्य चोपरि प्रशसापुष्पाणि विकीर्यन्ते, केन्द्रशासनेन प्रदेशशासनैश्च तद्विकासाय धनमपि व्ययीक्रियेत, न तावता सस्कृतस्य प्राणरक्षा सभवति। सस्कृतद्वारा च लब्धा भारतस्य सर्वतोमुखी सभूति सशयपद प्राप्नुयादिति सम्यगवगच्छन्तु धीमन्त।

**भारतामृतसर्वस्व या समाश्रयते गिरम्।**
**ता समाराध्य विन्दन्तु प्रकर्ष सर्वतोमुखम्॥**

('सस्कृत आपणो अमूल्य वारसो' इति शीर्षकेण पूर्व भवनेन प्रकाशिताया गुर्जरभाषापुस्तिकाया अय सस्कृतसक्षेप।)

